भोजवृत्ति

॥ पातञ्जलयोगसूत्रम् ॥

धारेश्वरभोजदेवविरचितराजमार्तण्डवृत्तिसमेतं

देहार्द्धयोगः शिवयोः स श्रेयांसि तनोतु वः ।
दुष्प्रापमपि यत्स्मृत्या जनः कैवल्यमश्नुते ॥ १॥

त्रिविधान्यपि दुःखानि यदनुस्मरणान्नृणाम् ।
प्रयान्ति सद्यो विलयं तं स्तुमः शिवमव्ययम् ॥ २॥

पतञ्जलिमुनेरुक्तिः काप्यपूर्वा जयत्यसौ ।
पुंप्रकृत्योर्वियोगोऽपि योग इत्युदितो यया ॥ ३॥

जयन्ति वाचः फणिभर्तुरान्तरस्फुरत्तमस्तोमनिशाकरत्विषः ।
विभाव्यमानाः सततं मनांसि याः सतां सदानन्दमयानि कुर्वते ॥ ४॥

शब्दानामनुशासनं विदधता पातञ्जले कुर्वता वृत्तिं
राजमृगाङ्कसंज्ञकमपि व्यतन्वता वैद्यके ।
वाक्चेतोवपुषां मलः फणिभृतां भर्त्रेव येनोद्धृतस्तस्य
श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः ॥ ५॥

दुर्बोधं यदतीव तद्विजहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिकैः ।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतॄणामिति वस्तुविप्लवकृतः सर्वेऽपि टीकाकृतः ॥ ६॥

उत्सृज्य विस्तरमुदस्य विकल्पजालं
फल्गुप्रकाशमवधार्य च सम्यगर्थान् ।
सन्तःपतञ्जलिमते विवृतिर्मयेय-
मातन्यते बुधजनप्रतिबोधहेतुः ॥ ७॥

अथ समाधिपादः ॥ १॥

अथ योगानुशासनम् ॥ समाधि १॥

वृत्तिः --- अनेन सूत्रेण शास्त्रस्य

सम्बन्धाभिधेयप्रयोजनान्याख्यायन्ते ।
अथशब्दोऽधिकारद्योतको मङ्गलार्थकश्च । योगो युक्तिः समाधानम् ।
युज समाधौ (धा० पा० ४।६७)। अनुशिष्यते व्याख्यायते
लक्षणभेदोपायफलैर्येन तदनुशासनम् । योगस्यानुशासनं
योगानुशासनम् । तदा शास्त्रपरिसमाप्तेरधिकृतं
बोद्धव्यमित्यर्थः ।
तत्र शास्त्रस्य व्युत्पाद्यतया योगः ससाधनः सफलोऽभिधेयः ।
तद्व्युत्पादनं च फलम् । व्युत्पादितस्य योगस्य कैवल्यं फलम् ।
शास्त्राभिधेययोः प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धः ।
अभिधेयस्य तत्फलस्य च कैवल्यस्य साध्यसाधनभावः । एतदुक्तं
भवति --- व्युत्पाद्यस्य योगस्य साधनानि शास्त्रेण प्रदर्श्यन्ते ।
तत्साधनसिद्धो योगः कैवल्याख्यं फलमुत्पादयति ॥ १॥

तत्र को योग इत्याह ---

योगश्चित्तवृत्तिनिरोधः ॥ समाधि २॥

वृत्तिः --- चित्तस्य निर्मलसत्त्वपरिणामरूपस्य या
वृत्तयोऽङ्गाङ्गिभावपरिणामरूपास्तासां निरोधो बहिर्मुखतया
परिणतिविच्छेदादन्तर्मुखतया प्रतिलोमपरिणामेन स्वकारणे लयो योग
इत्याख्यायते । स च निरोधः सर्वासां चित्तभूमीनां सर्वप्राणिनां
धर्मः कदाचित् कस्याञ्चिद्भूमवाविर्भवति ।
ताश्च क्षिप्तं मूढं विक्षिप्तम् एकाग्रं निरुद्धमिति चित्तस्य
भूमयश्चित्तस्यावस्थाविशेषाः । तत्र क्षिप्तं रजस उद्रेकादस्थिरं
बहिर्मुखतया सुखदुःखादिविषयेषु विकल्पितेषु व्यवहितेषु वा रजसा
प्रेरितम् । तच्च सदैव दैत्यदानवादीनाम् । मूढं तमस उद्रेकात्
कृत्याकृत्यविभागमन्तरेण क्रोधादिभिर्विरुद्धकृत्येष्वेव
नियमितम् ।
तच्च सदैव रक्षःपिशाचादीनाम् । विक्षिप्तं तु
सत्त्वोद्रेकाद्वैशिष्ट्येन
परिहृत्य दुःखसाधनं सुखसाधनेष्वेव शब्दादिषु प्रवृत्तम् ।
तच्च सदैव देवानाम् ।
एतदुक्तं भवति --- रजसा प्रवृत्तिरूपं तमसा परापकारनियतं
सत्त्वेन सुखमयं चित्तं भवति । एतास्तिस्रश्चित्तावस्थाः
समाधावनुपयोगिन्यः । एकाग्रनिरुद्धरूपे द्वे च
सत्त्वोत्कर्षाद्यथोत्तरमवस्थितत्त्वात् समाधावुपयोगं भजेते ।
सत्त्वादिक्रमव्युत्क्रमे त्वयमभिप्रायः --- द्वयोरपि
रजस्तमसोरत्यन्तहेयत्वेऽप्येतदर्थं रजसः प्रथममुपादानम् ।

यावन्न प्रवृत्तिर्दर्शिता तावन्निवृत्तिर्न शक्यते दर्शयितुमिति
द्वयोर्व्यत्ययेन प्रदर्शनम् । सत्त्वस्य त्वेतदर्थं पश्चात्
प्रदर्शनं
यत्, तस्योत्कर्षेणोत्तरे द्वे भूमी योगोपयोगिन्याविति ।
अनयोर्द्वयोरेकाग्रनिरुद्धयोर्भूम्योर्यश्चित्तस्यैकाग्रतारूपः परिणामः
स
योग इत्युक्तं भवति । एकाग्रे बहिर्वृत्तिनिरोधः । निरुद्धे च
सर्वासां
वृत्तिनां संस्काराणां च प्रविलय इत्यनयोरेव भूम्योर्योगस्य
सम्भवः ॥ २॥

इदानीं सूत्रकारश्चित्तवृत्तिनिरोधपदानि व्याख्यातुकामः प्रथमं
चित्तपदं व्याचष्टे ---

तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ समाधि ३॥

वृत्तिः --- द्रष्टुः पुरुषस्य तस्मिन् काले स्वरूपे
चिन्मात्रतायामवस्थानं
स्थितिर्भवति । अयमर्थः --- उत्पन्नविवेकख्यातेश्चित्संक्रमाभावात्
कर्तृत्वाभिमाननिवृत्तौ प्रोच्छन्नपरिणामायां बुद्धावात्मनः
स्वरूपेणावस्थानं स्थितिर्भवति ॥ ३॥

व्युत्थानदशायां तु तस्य किं रूपमित्याह ---

वृत्तिसारूप्यमितरत्र ॥ समाधि ४॥

वृत्तिः --- इतरत्र योगादन्यस्मिन् काले वृत्तयो या
वक्ष्यमाणलक्षणास्ताभिः सारूप्यं तद्रूपत्वम् । अयमर्थः ---
यादृश्यो वृत्तयः
सुखदुःखमोहात्मिकाः प्रादुर्भवन्ति तादृग्रूप एव संवेद्यते
व्यवहर्तृभिः पुरुषः । तदेवं यस्मिन्नेकाग्रतया परिणते
चितिशक्तेः
स्वस्मिन् रूपे प्रतिष्ठानं भवति यस्मिंश्चेन्द्रियवृत्तिद्वारेण
विषयाकारेण परिणते पुरुषस्तद्रूपाकार इव परिभाव्यते । यथा
जलतरङ्गेषु चलत्सु चन्द्रश्चलन्निव प्रतिभाषते तच्चित्तम् ॥ ४॥

वृत्तिपदं व्याख्यातुमाह ---

वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ समाधि ५॥

वृत्तिः --- वृत्तयश्चित्तपरिणामविशेषाः ।
वृत्तिसमुदायलक्षणस्याऽवयविनो याऽवयवभूता
वृत्तयस्तदपेक्षया तयप्प्रत्ययः (अष्टा०
५।२।४२)। एतदुक्तं भवति --- पञ्च वृत्तयः कीदृश्यः ।
क्लिष्टा अक्लिष्टाः । क्लेशैर्वक्ष्यमाणलक्षणैराक्रान्ताः क्लिष्टाः ।
तद्विपरीता अक्लिष्टाः ॥ ५॥

एता एव पञ्च वृत्तयः सङ्क्षिप्य उद्दिश्यन्ते ---

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ समाधि ६॥

वृत्तिः --- आसां क्रमेण लक्षणमाह ---

प्रत्यक्षानुमानागमाः प्रमाणानि ॥ समाधि ७॥

वृत्तिः --- अत्रातिप्रसिद्धत्वात् प्रमाणानां शास्त्रकारेण
भेदनिरूपणेनैव
गतत्वाल्लक्षणस्य पृथक् लक्षणं न कृतम् । प्रमाणलक्षणन्तु
---
अविसंवादि ज्ञानं प्रमाणमिति । इन्द्रियद्वारेण
बाह्यवस्तूपरागाच्चित्तस्य
तद्विषयसामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः
प्रत्यक्षम् । गृहीतसम्बन्धाल्लिङ्गाल्लिङ्गिनि सामान्याध्यवसायोऽनुमानम् ।
आप्तवचनमागमः ॥ ७॥

एवं प्रमाणरूपां वृत्तिं व्याख्याय विपर्ययरूपामाह ---

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ समाधि ८॥

वृत्तिः --- अतथाभूतेऽर्थे तथोत्पद्यमानं ज्ञानं विपर्ययः ।
यथा शुक्तिकायां रजतज्ञानम् । अतद्रूपप्रतिष्ठमिति ।
तस्यार्थस्य यद्रूपं तस्मिन् रूपे न
प्रतिष्ठति तस्यार्थस्य यत् पारमार्थिकं रूपं न तत् प्रतिभासयतीति
यावत् । संशयोऽप्यतद्रूपप्रतिष्ठितत्वान्मिथ्याज्ञानम् । यथा
स्थाणुर्वा पुरुषो वेति ॥ ८॥

विकल्पवृत्तिं व्याखातुमाह ---

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ समाधि ९॥

वृत्तिः --- शब्दजनितं ज्ञानं शब्दज्ञानम् । तदनुपतितुं शीलं यस्य सः शब्दज्ञानानुपाती । वस्तुनस्तथात्वमनपेक्षमाणो योऽध्यवसायः स विकल्प इत्युच्यते । यथा पुरुषस्य चैतन्यं स्वरूपमिति । अत्र देवदत्तस्य कम्बल इति शब्दजनिते ज्ञाने षष्ठ्या योऽध्यवसितो भेदस्तमिहाविद्यमानमपि समारोप्य प्रवर्ततेऽध्यवसायः । वस्तुतस्तु चैतन्यमेव पुरुषः ॥ ९॥

निद्रां व्याख्यातुमाह ---

अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ समाधि १०॥

वृत्तिः --- अभावप्रत्यय आलम्बनं यस्याः सा तथोक्ता । एतदुक्तं भवति --- या सन्ततमुद्रिक्तत्वात्तमसः समस्तविषयपरित्यागेन प्रवर्तते वृत्तिः सा निद्रा । तस्याश्च सुखमहमस्वाप्समिति स्मृतिदर्शनात् स्मृतेश्चानुभवव्यतिरेकेणानुपपत्तेर्वृत्तित्त्वम् ॥ १०॥

स्मृतिं व्याख्यातुमाह ---

अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ समाधि ११॥

वृत्तिः --- प्रमाणेनानुभूतस्य विषयस्य योऽयमसम्प्रमोषः संस्कारद्वारेण
बुद्धावारोहः सा स्मृतिः । तत्र प्रमाणविपर्ययविकल्पा जाग्रदवस्थाः । ता एव तदनुभवबलात् प्रक्षीयमाणाः स्वप्नः var (प्रत्यक्षायमाणाः ) । निद्रा त्वसंवेद्यमानविषया । स्मृतिश्च प्रमाणविपर्ययविकल्पनिद्रानिमित्तः ॥ ११॥

एवं वृत्तीर्व्याख्याय सोपायं निरोधं व्याख्यातुमाह ---

अभ्यासवैराग्याभ्यां तन्निरोधः ॥ समाधि १२॥

वृत्तिः --- अभ्यासवैराग्ये वक्ष्यमाणलक्षणे ताभ्यां प्रकाशप्रवृत्तिनियमरूपा या वृत्तयस्तासां निरोधो भवतीत्युक्तं भवति । तासां विनिवृत्तबाह्याभिनिवेशानामन्तर्मुखतया स्वकारण

एव चित्ते शक्तिरूपतयाऽवस्थानम् । तत्र विषयदोषदर्शनजेन वैराग्येण तद्वैमुख्यमुत्पाद्यते । अभ्यासेन च सुखजनकं शान्तप्रवाहप्रदर्शनद्वारेण दृढस्थैर्यमुत्पाद्यते । इत्थं ताभ्यां भवति चित्तवृत्तिनिरोधः ॥ १२॥

अभ्यासं व्याख्यातुमाह ---

तत्र स्थितौ यत्नोऽभ्यासः ॥ समाधि १३॥

वृत्तिः --- वृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः परिणामः स्थितिस्तस्यां यत्न उत्साहः पुनःपुनस्तथात्वेन चेतसि निवेशनमभ्यास इत्युच्यते ॥ १३॥

तस्यैव विशेषमाह ---

स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ समाधि १४॥

वृत्तिः --- बहुकालं नैरन्तर्येणादरातिशयेन च सेव्यमानो दृढभूमिः स्थिरो भवति । दार्ढ्याय प्रभवतीत्यर्थः ॥ १४॥

वैराग्यस्य लक्षणमाह ---

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ समाधि १५॥

वृत्तिः --- द्विविधो हि विषयो दृष्ट आनुश्रविकश्च ।
दृष्ट इहैवोपलभ्यमानः शब्दादिः । देवलोकादावानुश्रविकः ।
अनुश्रूयते गुरुमुखादित्यनुश्रवो वेदस्तत आगत आनुश्रविकः ।
तयोर्द्वयोरपि विषययोः परिणामविरसत्वदर्शनाद्विगतगर्धस्य या वशीकारसंज्ञा ममैते वश्या नाहमेतेषां वश्य इति योऽयं विमर्शस्तद्वैराग्यमुच्यते ॥ १५॥

तस्यैव विशेषमाह ---

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ समाधि १६॥

वृत्तिः --- तद्वैराग्यं परं प्रकृष्टं प्रथमं वैराग्यं विषयविषयं द्वितीयं गुणविषयमुत्पन्नगुणपुरुषविवेकख्यातेरेव भवति । निरोधसमाधेरत्यन्तानुकूलत्वात् ॥ १६॥

एवं योगस्य स्वरूपमुक्त्वा सम्प्रज्ञातस्वरूपभेदमाह ---

वितर्कविचारानन्दास्मितारूपानुगमात्सम्प्रज्ञातः ॥ समाधि १७॥

वृत्तिः --- समाधिरिति शेषः । सम्यक् संशयविपर्ययरहितत्वेन प्रज्ञायते प्रकर्षेण ज्ञायते भाव्यस्य रूपं येन स सम्प्रज्ञातः समाधिर्भावनाविशेषः । स वितर्कादिभेदाच्चतुर्विधः --- सवितर्कः सविचारः सानन्दः सास्मितश्च । भावना भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनःपुनर्निवेशनम् । भाव्यं च द्विविधम् --- ईश्वरस्तत्त्वानि च । तान्यपि द्विविधानि जडाजडभेदात् । जडानि चतुर्विंशतिः । अजडः पुरुषः ।
तत्र यदा महाभूतानीन्द्रियाणि स्थूलानि विषयत्वेनादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेखसम्भेदेन च भावना क्रियते तदा सवितर्कः समाधिः । अस्मिन्नेवावलम्बने पूर्वापरानुसन्धानशब्दोल्लेखशून्यत्वेन यदा भावना प्रवर्तते तदा निर्वितर्कः । तन्मात्रान्तःकरणलक्षणं सूक्ष्मविषयमालम्ब्य तस्य देशकालधर्मावच्छेदेन यदा भावना तदा सविचारः । तस्मिन्नेवावलम्बने देशकालधर्मावच्छेदं विना धर्मिमात्रावभासित्वेन भावना क्रियमाणा निर्विचार इत्युच्यते । एवंपर्यन्तः समाधिः ग्राह्यसमापत्तिरिति व्यपदिश्यते ।
यदा तु रजस्तमोलेशानुविद्धमन्तःकरणसत्त्वं भाव्यते तदा गुणभावाच्चितिशक्तेः सुखप्रकाशमयस्य सत्त्वस्य भाव्यमानस्योद्रेकात् सानन्दः समाधिर्भवति । तस्मिन्नेव समाधौ ये बद्धधृतयस्तत्त्वान्तरं प्रधानपुरुषरूपं न पश्यन्ति ते विगतदेहाहंकारत्वाद्विदेहशब्दवाच्याः । इयं ग्रहणसमापत्तिः ।

ततः परं रजस्तमोलेशानभिभूतशुद्धसत्त्वमालम्बनीकृत्य या प्रवर्तते भावना तस्यां ग्राह्यस्य न्यग्भावाच्चितिशक्तेरुद्रेकात् सत्तामात्रावशेषत्वेन समाधिः सास्मित इत्युच्यते । न चाहंकारास्मितयोरभेदः शङ्कनीयः । यतो यत्रान्तःकरणमहमिति उल्लेखेन विषयान् वेदयते सोऽहंकारः । यत्रान्तर्मुखतया प्रतिलोमपरिणामे प्रकृतिलीने चेतसि सत्तामात्रमवभाति साऽस्मिता । अस्मिन्नेव समाधौ ये कृतपरितोषाः परं परमात्मानं पुरुषं न पश्यन्ति तेषां चेतसि स्वकारणे लयमुपागते प्रकृतिलया इत्युच्यन्ते । ये परं पुरुषं ज्ञात्वा भावनायां प्रवर्तन्ते तेषामियं विवेकख्यातिर्ग्रहीतृसमापत्तिरित्युच्यते ।
तत्र सम्प्रज्ञाते समाधौ चतस्रोऽवस्थाः शक्तिरूपतयाऽवतिष्ठन्ते ।

तत्रैकैकस्यास्त्याग उत्तरोत्तरेति चतुरवस्थोऽयं सम्प्रज्ञातः समाधिः ॥ १७॥

असम्प्रज्ञातमाह ---

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ समाधि १८॥

वृत्तिः --- विरम्यतेऽनेनेति विरामो वितर्कादिचिन्तात्यागः । विरामश्चासौ प्रत्ययश्चेति विरामप्रत्ययः । तस्याभ्यासः पौनःपुन्येन चेतसि निवेशनम् । तत्र या काचिद्वृत्तिरुल्लसति तस्या नेति नेतीति नैरन्तर्येण पर्युदसनं विरामप्रत्ययाभ्यासः । तत्पूर्वः सम्प्रज्ञातसमाधिः । संस्कारशेषोऽन्यस्तद्विलक्षणोऽयमसम्प्रज्ञात इत्यर्थः । न तत्र किञ्चिद्वेद्यम् । असम्प्रज्ञातो निर्बीजः समाधिः । इह चतुर्विधश्चित्तस्य परिणामः --- व्युत्थानं समाधिप्रारम्भ एकाग्रता निरोधश्च । तत्र क्षिप्तमूढे चित्तभूमी व्युत्थानम् । विक्षिप्ता भूमिः सत्वोद्रेकात् समाधिप्रारम्भः । निरुद्धैकाग्रते च पर्यन्तभूमी । प्रतिपरिणामं च संस्काराः । तत्र व्युत्थानजनिताः संस्काराः समाधिप्रारम्भजैः संस्कारैः प्रत्याहन्यन्ते । तज्जाश्चैकाग्रताजैः । निरोधजनितैरेकाग्रताजा निरोधजाः संस्काराः स्वरूपं च हन्यन्ते । यथा सुवर्णसंवलितं ध्मायमानं सीसकमात्मानं सुवर्णमलं च निर्दहति । एवमेकाग्रताजनितान् संस्कारान् निरोधजाः स्वात्मानं च निर्दहन्ति ॥ १८॥

तदेवं योगस्य स्वरूपं भेदं च संक्षेपेणोपायांश्चाभिधाय विस्ताररूपेणोपायं योगाभ्यासप्रदर्शनपूर्वकमुपक्रमते ---

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ समाधि १९॥

वृत्तिः --- विदेहाः प्रकृतिलयाश्च वितर्कादिभूमिकासूत्रे (१।१७) व्याख्याताः । तेषां समाधिर्भवप्रत्ययः । भवः संसारः स एव प्रत्ययः कारणं यस्य स भवप्रत्ययः । अयमर्थः --- आधिमात्रान्तर्भूता एव ते संसारे [आविर्भूता एव संसारे ते] तथाविधसमाधिभाजो भवन्ति । तेषां परतत्त्वाऽदर्शनाद्योगाभासोऽयम् । अतः परतत्त्वज्ञाने तद्भावनायां च मुक्तिकामेन महान् यत्नो विधेय इत्येतदर्थमुपदिष्टम् ॥ १९॥

तदन्येषान्तु ---

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ समाधि २०॥

वृत्तिः --- विदेहप्रकृतिलयव्यतिरिक्तानां श्रद्धादिपूर्वकः
श्रद्धादयः पूर्वे उपाया यस्य स श्रद्धादिपूर्वकः ।
ते च श्रद्धादयः क्रमादुपायोपेयभावेन प्रवर्तमानाः
सम्प्रज्ञातसमाधेरुपायतां प्रतिपद्यन्ते । तत्र श्रद्धा योगविषये
चेतसः प्रसादः । वीर्यमुत्साहः । स्मृतिरनुभूतासम्प्रमोषः ।
समाधिरेकाग्रता । प्रज्ञा प्रज्ञातव्यविवेकः ।
तत्र श्रद्धावतो वीर्यं जायते योगविषय उत्साहवान् भवति ।
सोत्साहस्य च पाश्चात्यासु भूमिषु स्मृतिरुत्पद्यते । तत्स्मरणाच्च
चेतः समाधीयते । समाहितचित्तश्च भाव्यं सम्यग्विवेकेन
जानाति । त एते सम्प्रज्ञातस्य समाधेरुपायास्तस्याभ्यासात् पराच्च
वैराग्याद्भवत्यसम्प्रज्ञातः ॥ २०॥

उक्तोपायवतां योगिनामुपायभेदाद्भेदानाह ---

तीव्रसंवेगानामासन्नः ॥ समाधि २१॥

वृत्तिः --- समाधिलाभ इति शेषः। संवेगः क्रियाहेतुर्दृढतरः
संस्कारः । स तीव्रो येषामधिमात्रोपायानां तेषामासन्नः समाधिलाभः
समाधिफलं चासन्नं भवति । शीघ्रमेव सम्पद्यत इत्यर्थः ॥ २१॥

के ते तीव्रसंवेगा इत्याह ---

मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ समाधि २२॥

वृत्तिः --- तेभ्य उपायेभ्यो मृद्वादिभेदभिन्नेभ्य उपायवतां
विशेषो भवति । मृदुर्मध्योऽधिमात्र इत्युपायभेदाः । ते
प्रत्येकं मृदुसंवेगमध्यसंवेगतीव्रसंवेगभेदात् त्रिधा ।
तद्भेदेन च नव योगिनो भवन्ति --- मृदूपायो मृदुसंवेगो
मध्यसंवेगस्तीव्रसंवेगश्च । मध्योपायो मृदुसंवेगो
मध्यसंवेगस्तीव्रसंवेगश्च । अधिमात्रोपायो मृदुसंवेगो
मध्यसंवेगस्तीव्रसंवेगश्च । अधिमात्र उपाये तीव्रे संवेगे च
महान् यत्नः कर्तव्य इति भेदोपदेशः ॥ २२॥

इदानीमेतदुपायविलक्षणं सुगममुपायान्तरं दर्शयितुमाह ---

ईश्वरप्रणिधानाद्वा ॥ समाधि २३॥

वृत्तिः --- ईश्वरो वक्ष्यमाणलक्षणः । तत्र प्रणिधानं भक्तिविशेषो विशिष्टमुपासनं सर्वक्रियाणां तत्रार्पणम् । विषयसुखादिकं फलमनिच्छन् सर्वाः क्रियास्तस्मिन् परमगुरावर्पयति । तत्प्रणिधानं समाधेस्तत्फललाभस्य च प्रकृष्ट उपायः ॥ २३॥

ईश्वरस्य प्रणिधानात् समाधिलाभ इत्युक्तम् । तत्रेश्वरस्य स्वरूपं प्रमाणं प्रभावं वाचकमुपासनाक्रमं तत्फलं च क्रमेण वक्तुमाह ---

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ समाधि २४॥

वृत्तिः --- क्लिश्नन्तीति क्लेशा अविद्यादयो वक्ष्यमाणाः । विहितनिषिद्धव्यामिश्ररूपाणि कर्माणि । विपच्यन्त इति विपाकाः कर्मफलानि जात्यायुर्भोगाः । आफलविपाकाच्चित्तभूमौ शेरत इत्याशयो वासनाख्यसंस्कारः । तैरपरामृष्टस्त्रिष्वपि कालेषु न संस्पृष्टः । पुरुषविशेषोऽन्येभ्यः पुरुषेभ्यो विशिष्यते इति विशेष ईश्वरः ईशनशील इच्छामात्रेण सकलजगदुद्धरणक्षमः । यद्यपि सर्वेषामात्मणां क्लेशादिस्पर्शो नास्ति तथापि चित्तगतास्तेषामुपदिश्यन्ते । यथा योद्धृगतो जयपराजयौ स्वामिनः । अस्य तु त्रिष्वपि कालेषु तथाविधोऽपि क्लेशादिपरामर्शो नास्ति । अतः सविलक्षण एव भगवानीश्वरः । तस्य च तथाविधमैश्वर्यमनादेः सत्त्वोत्कर्षात् । तस्य सत्त्वोत्कर्षस्य प्रकृष्टाज्ज्ञानादेव । न चानयोर्ज्ञानैश्वर्ययोरितरेतराश्रयत्वं परस्परानपेक्षत्वात् । ते द्वे ज्ञानैश्वर्ये ईश्वरसत्त्वे वर्तमाने अनादिभूते तेन तथाविधेन सत्त्वेन तस्यानादिरेव सम्बन्धः । प्रकृतिपुरुषसंयोगवियोगयोरीश्वरेच्छाव्यतिरेकेणानुपपत्तेः । यथेतरेषां प्राणिनां सुखदुःखमोहात्मकतया परिणतं चित्तं निर्मले सात्त्विके धर्मानुप्रख्ये प्रतिसङ्क्रान्तं चिच्छायासंक्रान्ते संवेद्यं भवति नैवमीश्वरस्य । तस्य केवल एव सात्त्विकः परिणाम उत्कर्षवाननादिसम्बन्धेन भोग्यतया व्यवस्थितः । अतः पुरुषान्तरविलक्षणतया स एव ईश्वरः । मुक्तात्मनान्तु पुनःपुनः क्लेशादियोगस्तैस्तैः शास्त्रोक्तैरुपायैर्निवर्तितः । अस्य पुनः सर्वदैव तथाविधत्वान्न मुक्तात्मतुल्यत्वम् । न चेश्वराणामनेकत्वम् । तेषां तुल्यत्वे भिन्नाभिप्रायत्वात् कार्यस्यैवानुपपत्तेः । उत्कर्षापकर्षयुक्तत्वे य एवोत्कृष्टः स एवेश्वरस्तत्रैव काष्ठाप्राप्तत्वादैश्वर्यस्य ॥ २४॥

एवमीश्वरस्य स्वरूपमभिधाय प्रमाणमाह ---

तत्र निरतिशयं सार्वज्ञ्यबीजम् ॥ समाधि २५॥

वृत्तिः --- तस्मिन् भगवति सर्वज्ञत्वस्य यद्बीजमतीतानागतादिग्रहणस्याल्पत्वं महत्वं च मूलत्वाद्बीजमिव बीजम् । तत् तत्र निरतिशयं काष्ठां प्राप्तम् । दृष्टा ह्यल्पत्वमहत्वादीनां धर्माणां सातिशयानां काष्ठाप्राप्तिः । यथा परमाणावल्पत्वस्याकाशे परममहत्वस्य । एवं ज्ञानादयोऽपि चित्तधर्मास्तारतम्येन परिदृश्यमानाः क्वचिन्निरतिशयतामासादयन्ति । यत्र चैते निरतिशयाः स ईश्वरः ।
यद्यपि सामान्यमात्रेऽनुमानस्य पर्यवसितत्वान्न विशेषावगतिः सम्भवति तथापि शास्त्रादस्य सर्वज्ञत्वादयो विशेषा अवगन्तव्याः । तस्य स्वप्रयोजनाभावे कथं प्रकृतिपुरुषयोः संयोगवियोगावापादयतीति नाऽऽशङ्कनीयं तस्य कारुणिकत्वाद्भूतानुग्रह एव प्रयोजनम् । कल्पप्रलयमहाप्रलयेषु निःशेषान् संसारिण उद्धरिष्यामीति तस्याध्यवसायः । यद्यस्येष्टं तत्तस्य प्रयोजनमिति ॥ २५॥

एवमीश्वरस्य प्रमाणमभिधाय प्रभावमाह ---

स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ समाधि २६॥

वृत्तिः --- आद्यानां स्रष्टॄणां ब्रह्मादीनामपि स गुरुरुपदेष्टा यतः स कालेन नावच्छिद्यतेऽनादित्वात् । तेषां ब्रह्मादीनां पुनरादिमत्त्वादस्ति कालेनावच्छेदः ॥ २६॥

एवं प्रभावमुक्त्वोपासनोपयोगाय वाचकमाह ---

तस्य वाचकः प्रणवः ॥ समाधि २७॥

वृत्तिः --- इत्थमुक्तस्वरूपस्येश्वरस्य वाचकोऽभिधायकः प्रकर्षेण नूयते स्तूयतेऽनेनेति नौति स्तौतीति वा प्रणव ओंकारः । तयोश्च वाच्यवाचकलक्षणः सम्बन्धो नित्यः संकेतेन प्रकाश्यते न तु केनचित् क्रियते । यथा पितापुत्रयोर्विद्यमान एव सम्बन्धोऽस्यायं पिताऽस्यायं पुत्र इति केनचित् प्रकाश्यते ॥ २७॥

उपासनमाह ---

तज्जपस्तदर्थभावनम् ॥ समाधि २८॥

वृत्तिः --- तस्य सार्धत्रिमात्रिकस्य प्रणवस्य जपो यथावदुच्चारणं तद्वाच्यस्य चेश्वरस्य भावनं पुनःपुनश्चेतसि निवेशनमेकाग्रताया उपायः । अतः समाधिसिद्धये योगिना प्रणवो जप्यस्तदर्थ ईश्वरश्च भावनीय इत्युक्तं भवति ॥ २८॥

उपासनायाः फलमाह ---

ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्च ॥ समाधि २९॥

वृत्तिः --- तस्माज्जपात्तदर्थभावनायाश्च योगिनः प्रत्यक्चेतनाऽधिगमो भवति । विषयप्रातिकूल्येन स्वान्तःकरणाभिमुखमञ्चति या चेतना दृक्शक्तिः सा प्रत्यक्चेतना तदधिगमो ज्ञानं भवतीत्यर्थः । अन्तराया वक्ष्यमाणाः । तेषामभावः शक्तिप्रतिबन्धोऽपि भवति ॥ २९॥

अथ केऽन्तराया इत्याशङ्कायामाह ---

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ समाधि ३०॥

वृत्तिः --- नवैते रजस्तमोबलात् प्रवर्तमानाश्चित्तस्य विक्षेपा भवन्ति । तैरेकाग्रताविरोधिभिश्चित्तं विक्षिप्यत इत्यर्थः । तत्र व्याधिर्धातुवैषम्यनिमित्तो ज्वरादिः । स्त्यानमकर्मण्यता चित्तस्य । उभयकोट्यालम्बनं ज्ञानं संशयः --- योगः साध्यो न वेति । प्रमादोऽनवधानता समाधिसाधनेष्वौदासीन्यम् । आलस्यं कायचित्तयोर्गुरुत्वं योगविषये प्रवृत्त्यभावहेतुः । अविरतिश्चित्तस्य विषयसम्प्रयोगात्मा गर्धः । भ्रान्तिदर्शनं शुक्तिकायां रजतवद्विपर्ययज्ञानम् । अलब्धभूमिकत्वं कुतश्चिन्निमित्तात् समाधिभूमेरलाभोऽसम्प्राप्तिः । अनवस्थितत्त्वं लब्धायामपि भूमौ चित्तस्य तत्राप्रतिष्ठा । त एते समाधेरेकाग्रताया यथायोगं प्रतिपक्षत्वादन्तराया इत्युच्यते ॥ ३०॥

चित्तविक्षेपकारकानन्यानप्यन्तरायान् प्रतिपादयितुमाह ---

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ समाधि ३१॥

वृत्तिः --- कुतश्चिन्निमित्तादुत्पन्नेषु विक्षेपेषु एते दुःखादयः प्रवर्तन्ते । तत्र दुःखं चित्तस्य रजसः परिणामो बाधनालक्षणो यद्बाधात् प्राणिनस्तदुपघाताय प्रवर्तन्ते । दौर्मनस्यं बाह्याभ्यन्तरैः कारणैर्मनसो दौःस्थ्यम् । अङ्गमेजयत्वं सर्वाङ्गीनो वेपथुरासनमनःस्थैर्यस्य बाधकः । प्राणो यद्बाह्यं वायुमाचामति स श्वासः, यत् कौष्ठ्यं वायुं निःश्वसिति स प्रश्वासः । एते विक्षेपैः सह प्रवर्तमाना यथोदिताभ्यासवैराग्याभ्यां निरोद्धव्या इत्येषामुपदेशः ॥ ३१॥

सोपद्रवविक्षेपप्रतिषेधार्थमुपायान्तरमाह ---

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ समाधि ३२॥

वृत्तिः --- तेषां विक्षेपाणां प्रतिषेधार्थमेकस्मिन् कस्मिंश्चिदभिमते तत्त्वेऽभ्यासश्चेतसः पुनःपुनर्निवेशनं कार्यः । यद्बलात् प्रत्युदितायामेकाग्रतायां ते विक्षेपाः प्रणाशमुपयान्ति ॥ ३२॥

इदानीं चित्तसंस्कारापादकपरिकर्मकथनमुपायान्तरमाह ---

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयानां
भावनातश्चित्तप्रसादनम् ॥ समाधि ३३॥

वृत्तिः --- मैत्री सौहार्दम् । करुणा कृपा । मुदिता हर्षः । उपेक्षौदासीन्यम् । एता यथाक्रमं सुखितेषु दुःखितेषु पुण्यवत्स्वपुण्यवत्सु च विभावयेत् । तथाहि --- सुखितेषु साधुषु एषां सुखित्वमिति मैत्रीं कुर्यान्न तु ईर्ष्याम् । दुःखितेषु कथं नु नामैषां दुःखनिवृत्तिः स्यादिति कृपामेव कुर्यान्न ताटस्थ्यम् । पुण्यवत्सु पुण्यानुमोदनेन हर्षमेव कुर्यान्न तु किमेते पुण्यवन्त इति विद्वेषम् । अपुण्यवत्सु चौदासीन्यमेव भावयेन्नानुमोदनं न वा द्वेषम् । सूत्रे सुखदुःखादिशब्दैस्तद्वन्तः प्रतिपादिताः । तदेवं मैत्र्यादिपरिकर्मणा चित्ते प्रसीदति सुखेन समाधेराविर्भावो भवति । परिकर्म चैतद्बाह्यं कर्म । यथा गणिते मिश्रकादिव्यवहारो गणितनिष्पत्तये संकलितादिकर्मोपकारकत्वेन प्रधानकर्मनिष्पत्तये भवत्येवं द्वेषरागादिप्रतिपक्षभूतमैत्र्यादिभावनया समुत्पादितप्रसादं चित्तं सम्प्रज्ञातादिसमाधियोग्यं सम्पद्यते । रागद्वेषावेव मुख्यतया विक्षेपमुत्पादयतः । तौ चेत्

समूलमुन्मूलितौ स्यातां तदा प्रसन्नत्वान्मनसो भवत्येकाग्रता ॥ ३३॥

उपायान्तरमाह ---

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ समाधि ३४॥

वृत्तिः --- प्रच्छर्दनं कौष्ट्यस्य वायोः प्रयत्नविशेषान्मात्राप्रमाणेन बहिर्निःसारणम् । मात्राप्रमाणेनैव प्राणस्य वायोर्बहिर्गतिविच्छेदो विधारणा । सा च द्वाभ्यां प्रकाराभ्यां बाह्यस्याभ्यन्तरापूरणेन पूरितस्य वा तत्रैव निरोधेन । तदेवं रेचकपूरककुम्भकस्त्रिविधः प्राणायामश्चित्तस्य स्थितिमेकाग्रतायां निबध्नाति सर्वासामिन्द्रियवृत्तीनां प्राणवृत्तिपूर्वकत्वात् । मनःप्राणयोश्च स्वव्यापारपरस्परमेकयोगक्षेमत्वाज्जीयमाणः प्राणः समस्तेन्द्रियवृत्तिनिरोधद्वारेण चित्तस्यैकाग्रतायां प्रभवति । समस्तदोषक्षयकारित्वं चास्यागमे श्रूयते । दोषकृताश्च सर्वा विक्षेपवृत्तयः । अतो दोषनिर्हरणद्वारेणाप्यस्यैकाग्रतायां सामर्थ्यम् ॥ ३४॥

इदानिमुपायान्तरप्रदर्शनोपक्षेपेण सम्प्रज्ञातस्य समाधेः पूर्वाङ्गं कथयति ---

विषयवती वा प्रवृतिरुत्पन्ना स्थितिनिबन्धिनी ॥ समाधि ३५॥

वृत्तिः --- मनस इति वाक्यशेषः । विषया गन्धरसरूपस्पर्शशब्दास्ते विद्यन्ते फलत्वेन यस्याः सा विषयवती प्रवृत्तिर्मनसः स्थैर्यं करोति । तथाहि नासाग्रे चित्तं धारयतो दिव्यगन्धसंविदुपजायते । तादृश्य एव जिह्वाग्रे रससंबित् । ताल्वग्रे रूपसंवित् । जिह्वामध्ये स्पर्शसंवित् । जिह्वामूले शब्दसंवित् । तदेवं तत्तदिन्द्रियद्वारेण तस्मिंस्तस्मिन्विषये दिव्ये जायमाना संविच्चित्तस्यैकाग्रताया हेतुर्भवति । अस्ति योगस्य फलमिति योगिनः समाश्वासोत्पादनात् ॥ ३५॥

एवम्विधमेवोपायान्तरमाह ---

विशोका वा ज्योतिष्मती ॥ समाधि ३६॥

वृत्तिः --- प्रवृत्तिरुत्पन्ना चित्तस्य स्थितिनिबन्धिनीति वाक्यशेषः । ज्योतिःशब्देन सात्त्विकः प्रकाश उच्यते । स प्रशस्तो

भूयानतिशयवांश्च विद्यते यस्याः सा ज्योतिष्मती प्रवृत्तिः । विशोका विगतः सुखमयसत्त्वाभ्यासवशाच्छोको रजःपरिणामो यस्याः सा विशोका चेतसः स्थितिनिबन्धिनी । अयमर्थः --- हृत्पद्मसम्पूटमध्ये प्रशान्तकल्लोलक्षीरोदधिप्रख्यं चित्तस्य सत्त्वं भावयतः प्रज्ञालोकात् सर्ववृत्तिक्षये चेतसः स्थैर्यमुत्पद्यते ॥ ३६॥

उपायान्तरप्रदर्शनद्वारेण सम्प्रज्ञातसमाधेर्विषयं दर्शयति
---

वीतरागविषयं वा चित्तम् ॥ समाधि ३७॥

वृत्तिः --- मनसः स्थितिनिबन्धनं भवतीति शेषः । वीतरागः परित्यक्तविषयाभिलाषस्तस्य यच्चित्तं परिहृतक्लेशं तदालम्बनीकृतं चेतसः स्थितिहेतुर्भवति ॥ ३७॥

एवंविधमुपायान्तरमाह ---

स्वप्ननिद्राज्ञानालम्बनं वा ॥ समाधि ३८॥

वृत्तिः --- प्रत्यस्तमितबाह्येन्द्रियवृत्तेर्मनोमात्रेणैव यत्र भोक्तृत्वमात्मनः स स्वप्नः । निद्रा पूर्वोक्तलक्षणा । तदालम्बनं स्वप्नालम्बनं निद्रालम्बनं वा ज्ञानमालम्ब्यमानं चेतसः स्थितिं करोति ॥ ३८॥

नानारुचित्वात् प्राणिनां यस्मिन् कस्मिंश्चिद्वस्तुनि योगिनः श्रद्धा भवति । तस्य ध्यानेनापीष्टसिद्धिरिति प्रतिपादयितुमाह ---

यथाभिमतध्यानाद्वा ॥ समाधि ३९॥

वृत्तिः --- यथाभिप्रेते वस्तुनि बाह्ये चन्द्रादावभ्यन्तरे नाडिचक्रादौ वा भाव्यमाने चेतः स्थिरीभवति ॥ ३९॥

एवमुपायान् प्रदर्श्य फलदर्शनायाह ---

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ समाधि ४०॥

वृत्तिः --- एभिरुपायैश्चित्तस्य स्थैर्यं भावयतो योगिनः सूक्ष्मविषयभावनाद्वारेण परमाण्वन्तो वशीकारोऽप्रतिघातरूपो जायते ।

न क्वचित् परमाणुपर्यन्ते सूक्ष्मे विषयेऽस्य मनः प्रतिहन्यते इत्यर्थः । एवं स्थूलमाकाशादिपरममहत्वपर्यन्तं भावयतो न क्वचिच्चेतसः प्रतिघात उत्पद्यते सर्वत्र स्वातन्त्र्यं भवतीत्यर्थः ॥ ४०॥

एवमेभिरुपायैः संस्कृतस्य चेतसः कीदृग्रूपं भवतीत्याह ---

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु
तत्स्थतदञ्जनता समापत्तिः ॥ समाधि ४१॥

वृत्तिः --- क्षीणा वृत्तयो यस्य स क्षीणवृत्तिस्तस्य ग्रहीतृग्रहणग्राह्येष्वात्मेन्द्रियविषयेषु तत्स्थतदञ्जनता समापत्तिर्भवति । तत्स्थत्वं तत्रैकाग्रता । तदञ्जनता तन्मयत्वम् । क्षीणभूते चित्ते विषयस्य भाव्यमानस्यैवोत्कर्षः ।

variation न्यग्भूते चित्ते

तथाविधा समापत्तिस्तद्रूपः परिणामो भवतीत्यर्थः । दृष्टान्तमाहाऽभिजातस्येव मणेरिति । यथाऽभिजातस्य निर्मलस्फटिकमणेस्तत्तदुपाधिवशात् तत्तद्रूपापत्तिरेवं निर्मलस्य चित्तस्य तत्तद्भावनीयवस्तूपरागात्तत्तद्रूपापत्तिः । यद्यपि ग्रहीतृग्रहणग्राह्येषु इत्युक्तं तथापि भूमिकाक्रमवशाद्ग्राह्यग्रहणग्रहीतृषु इति बोध्यम् । यतः प्रथमं ग्राह्यनिष्ठ एव समाधिस्ततो ग्रहणनिष्ठस्ततोऽस्मितामात्ररूपो ग्रहीतृनिष्ठः केवलस्य पुरुषस्य ग्रहीतुर्भाव्यत्वासम्भवात् । ततश्च स्थूलसूक्ष्मग्राह्योपरक्तं चित्तं तत्र समापन्नं भवति । एवं ग्रहणे ग्रहीतरि च समापन्नं बोध्यव्यम् ॥ ४१॥

इदानीमुक्ताया एव समापत्तेश्चातुर्विध्यमाह ---

शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः ॥ समाधि ४२॥

वृत्तिः --- श्रोत्रेन्दियग्राह्यः स्फोटरूपो वा शब्दः । अर्थो जात्यादिः । ज्ञानं सत्त्वप्रधाना बुद्धिवृत्तिः । विकल्प उक्तलक्षणः । तैः संकीर्णाः । यस्यामेते शब्दादयस्त्रयः परस्पराध्यासेन विकल्परूपेण प्रतिभासन्ते गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यनेनाकारेण सा सवितर्का समापत्तिरुच्यते ॥ ४२॥

उक्तलक्षणविपरीतां निर्वितर्कामाह ---

स्मृतिपरिशुद्धौ स्वरूपशून्येवाऽर्थमात्रनिर्भासा निर्वितर्का ॥ समाधि ४३॥

वृत्तिः --- शब्दार्थस्मृतिप्रविलये सति प्रत्युदितस्पष्टग्राह्याकारप्रतिभासतया न्यग्भूतज्ञानांशत्वेन स्वरूपशून्येव निर्वितर्का समापत्तिः ॥ ४३॥

भेदान्तरं प्रतिपादयितुमाह ---

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ समधि ४४॥

वृत्तिः --- एतयैव सवितर्कया निर्वितर्कया च समापत्त्या सविचारा निर्विचारा च व्याख्याता । कीदृशी । सूक्ष्मविषया सूक्ष्मस्तन्मात्रेन्द्रियादिर्विषयो यस्याः सा तथोक्ता । एतेन पूर्वस्याः स्थूलविषयत्वं प्रतिपादितं भवति । सा हि महाभूतेन्द्रियालम्बना । शब्दार्थविषयत्वेन शब्दार्थविकल्पसहितत्वेन देशकालधर्माद्यवच्छिन्नः सूक्ष्मोऽर्थः प्रतिभाति यस्यां सा सविचारा । देशकालधर्मादिरहितो धर्मिमात्रतया सूक्ष्मार्थस्तन्मात्रेन्द्रियरूपः प्रतिभाति यस्यां सा निर्विचारा ॥ ४४॥

अस्या एव सूक्ष्मविषयायाः किम्पर्यन्तः सूक्ष्मविषय इत्याह ---

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ समाधि ४५॥

वृत्तिः --- सविचारनिर्विचारयोः समापत्त्योर्यत् सूक्ष्मविषयत्वमुक्तं तदलिङ्गपर्यवसानम् । न क्वचिल्लीयते न वा किञ्चिल्लिङ्गति गमयतीत्यलिङ्गं प्रधानम् । तत्पर्यन्तं सूक्ष्मविषयत्वम् । तथाहि --- गुणानां परिणामे चत्वारि पर्वाणि --- विशिष्टलिङ्गमविशिष्टलिङ्गं लिङ्गमात्रमलिङ्गं चेति । विशिष्टलिङ्गं भूतेन्द्रियाणि । अविशिष्टलिङ्गां तन्मात्रान्तःकरणानि । लिङ्गमात्रं बुद्धिः । अलिङ्गम् प्रधानमिति । नातः परं सूक्ष्ममस्तीत्युक्तं भवति ॥ ४५॥

एतासां समापत्तीनां प्रकृते प्रयोजनमाह ---

ता एव सबीजः समाधिः ॥ समाधि ४६॥

वृत्तिः --- ता एवोक्तलक्षनाः समापत्तयः सबीजः सह बीजेनालम्बनेन वर्तत इति सबीजः सम्प्रज्ञातः समाधिरुच्यते सर्वासां सालम्बनत्वात् ॥ ४६॥

अथेतरासां समापत्तीनां निर्विचारफलत्वान्निर्विचारायाः फलमाह ---

निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ समाधि ४७॥

वृत्तिः --- निर्विचारत्वं व्याख्यातम् (१।४४)। वैशारद्यं
नैर्मल्यम् । सवितर्कां स्थूलविषयामपेक्ष्य निर्वितर्कायाः प्राधान्यम् ।
ततोऽपि सूक्ष्मविषयायाः सविचारायाः । ततोऽपि निर्विचारायाः ।
तस्यास्तु निर्विकल्परूपायाः प्रकृष्टाभ्यासवशाद्वैशारद्ये
नैर्मल्ये सत्यध्यात्मप्रसादः समुपजायते । चित्तं क्लेशवासनारहितं
स्थितिप्रवाहयोग्यं भवति । एतदेव चित्तस्य वैशारद्यं यत् स्थितौ
दार्ढ्यम् ॥ ४७,,
तस्मिन् सति किं भवतीत्याह ---

ऋतम्भरा तत्र प्रज्ञा ॥ समधि ४८॥

वृत्तिः --- ऋतं सत्यं विभर्ति कदाचिदपि न
विपर्ययेणाच्छाद्यते सा ऋतम्भरा प्रज्ञा तस्मिन् भवतीत्यर्थः ।
तस्माच्च प्रज्ञालोकात् सर्वं यथावत् पश्यन् योगी प्रकृष्टं
योगं प्राप्नोति ॥ ४८॥

अस्याः प्रज्ञान्तराद्वैलक्षण्यमाह ---

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ समाधि ४९॥

[ प्रज्ञाभ्यां सामान्यविषया इति पाठोऽपि दृश्यते । ]

वृत्तिः --- श्रुतमागमज्ञानम् । अनुमानमुक्तलक्षणम्
(१।७)। ताभ्यां या जायते प्रज्ञा सा सामान्यविषया । न
हि शब्दलिङ्गयोरिन्द्रियवद्विशेषप्रतिपत्तौ सामर्थ्यम् ।
इयं पुनः निर्विचारवैशारद्यसमुद्भवा प्रज्ञा
ताभ्यां विलक्षणा विशेषविषयत्वात् । अस्यां हि प्रज्ञायां
सूक्ष्मव्यवहितविप्रकृष्टानामपि विशेषः स्फुटेनैव रूपेण भासते ।
अतस्तस्यामेव योगिना परः प्रयत्नः कर्तव्य इत्युपदिष्टं भवति ॥ ४९॥

अस्याः प्रज्ञायाः फलमाह ---

तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ समाधि ५०॥

वृत्तिः --- तया प्रज्ञया जनितो यः संस्कारः सोऽन्यान् संस्कारान् व्युत्थानजान् समाधिजांश्च संस्कारान् प्रतिबध्नाति स्वकार्यकरणाक्षमान् करोतीत्यर्थः । यतस्तत्त्वरूपतयाऽनया जनिताः संस्कारा बलवत्वादतत्त्वरूपप्रज्ञाजनितान् संस्कारान् बाधितुं शक्नुवन्ति । अतस्तामेव प्रज्ञामभ्यसेदित्युक्तं भवति ॥ ५०॥

एवं सम्प्रज्ञातसमाधिमभिधायासम्प्रज्ञातं वक्तुमाह ---

तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ समाधि ५१॥

वृत्तिः --- तस्यापि सम्प्रज्ञातस्य निरोधे विलये सति सर्वासां चित्तवृत्तीनां कारणे प्रविलयाद्या संस्कारमात्राद्वृत्तिरुदेति तस्यां नेति नेति केवलं पर्युदसनान्निर्बीजः समाधिर्भवति यस्मिन् सति पुरुषः स्वरूपनिष्ठः शुद्धो भवति ॥ ५१॥

तदत्राधिकृतस्य योगस्य लक्षणं चित्तवृत्तिनिरोधपदानां व्याख्यानमभ्यासवैराग्यलक्षणस्योपायद्वयस्य स्वरूपं भेदं चाभिधाय सम्प्रज्ञातासम्प्रज्ञातभेदेन योगस्य मुख्यामुख्यभेदमुक्त्वा योगाभ्यासप्रदर्शनपूर्वकं विस्तारेणोपायान् प्रदर्श्य सुगमोपायप्रदर्शनपरतया ईश्वरस्य स्वरूपप्रमाणप्रभाववाचकोपासनानि तत्फलानि च निर्णीय चित्तविक्षेपांस्तत्तत्सहभुवश्च दुःखादीन् विस्तरेण च तत्प्रतिषेधोपायानेकत्वाभ्यासमैत्र्यादिप्राणायामादीन् सम्प्रज्ञातासम्प्रज्ञातपूर्वाङ्गभूतविषयवती प्रवृत्तिरित्यादीनाख्यायोपसंहारद्वारेण च समापत्तिं लक्षणफलसहितां स्वस्वविषयसहितां चोक्त्वा सम्प्रज्ञातासम्प्रज्ञातयोरुपसंहारमभिधाय सबीजपूर्वकनिर्बीजसमाधिरभिहित इति व्याकृतो योगपादः ।

इति धारेश्वरभोजदेवविरचितायां राजमार्तण्डाभिधायां पातञ्जलवृत्तौ समाधिपादः ॥ १॥

इति समाधिपादः ॥ १॥

----------------------------------------

अथ साधनपादः ॥ २॥

ते ते दुष्प्रापयोगर्द्धिसिद्धये येन दर्शिताः ।
उपायाः स जगन्नाथस्त्र्यक्षोऽस्तु प्रार्थिताप्तये ॥

तदेवं प्रथमे पादे समाहितचित्तस्य सोपायं योगमभिधाय व्युत्थितचित्तस्यापि कथमुपायाभ्यासपूर्वको योगः स्वास्थ्यमुपयातीति तत्साधनानुष्ठानप्रतिपादनाय क्रियायोगमाह ---

तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ साधन १॥

वृत्तिः --- तपः शास्त्रान्तरोपदिष्टं कृच्छ्रचान्द्रायणादि । स्वाध्यायः प्रणवपूर्वाणां मन्त्राणां जपः । ईश्वरप्रनिधानं सर्वक्रियाणां तस्मिन् परमगुरौ फलनिरपेक्षतया समर्पणम् । एतानि क्रियायोग इत्युच्यते ॥ १॥

स किमर्थमित्याह ---

समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ साधन २॥

वृत्तिः --- क्लेशा वक्ष्यमाणास्तेषां तनूकरणं स्वकार्यकरणप्रतिबन्धः । समाधिरुक्तलक्षणः (१।१७)। तस्य भावना चेतसि पुनःपुनर्निवेशनं साऽर्थः प्रयोजनं यस्य स तथोक्तः । एतदुक्तं भवति --- एते तपःप्रभृतयोऽभ्यस्यमानाश्चित्तगतानविद्यादीन् क्लेशान् शिथिलीकुर्वन्तः समाधेरुपकारकतां भजन्ते । तस्मात् प्रथमं क्रियायोगविधानपरेण योगिना भवितव्यमित्युपदिष्टम् ॥ २॥

क्लेशतनूकरणार्थ इत्युक्तम् । तत्र के क्लेशा इत्याह ---

अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ साधन ३॥

वृत्तिः --- अविद्यादयाः वक्ष्यमाणलक्षणाः पञ्च । ते बाधनालक्षणं परितापमुपजनयन्तः क्लेशशब्दवाच्या भवन्ति । ते हि चेतसि प्रवर्तमानाः संस्कारलक्षणं गुणपरिणामं द्रढयन्ति ॥ ३॥

सत्यपि सर्वेषां तुल्यक्लेशत्वे मूलभूतत्वादविद्यायाः प्राधान्यं प्रतिपादयितुमाह ---

अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ साधन ४॥

वृत्तिः --- अविद्या मोहोऽनात्मन्यात्माभिमान इति यावत् । सा क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां प्रत्येकं प्रसुप्ततन्वादिभेदेन चतुर्विधानाम् । अतो यत्राविद्या विपर्ययज्ञानरूपा शिथिलीभवति तत्र क्लेशानामस्मितादीनां नोद्भवो दृश्यते । विपर्ययज्ञानसद्भावे च तेषामुद्भवदर्शनात् स्थितमेव मूलत्वमविद्यायाः ।
प्रसुप्ततनुविच्छिन्नोदाराणामिति । तत्र ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधकाभावे स्वकार्यं नारभन्ते ते प्रसुप्ता इत्युच्यन्ते । यथा बालावस्थायां बालस्य हि वासनारूपाः स्थिता अपि क्लेशाः प्रबोधकसहकार्यभावे नाभिव्यज्यन्ते ।
ते तनवो ये स्वस्वप्रतिपक्षभावनया शिथिलीकृतकार्यसम्पादनशक्तयो वासनाऽवशेषतया चेतस्यवस्थिताः प्रभूतां सामग्रीमन्तरेण स्वकार्यमारब्धुमक्षमा यथाऽभ्यासवतो योगिनः ।
ते विच्छिन्ना ये केनचिद्बलवता क्लेशेनाभिभूतशक्तयस्तिष्ठन्ति यथा द्वेषावस्थायां रागो रागावस्थायां वा द्वेषः । न ह्यनयोः परस्परविरुद्धयोर्युगपत् सम्भवोऽस्ति ।
ते उदारा ये प्राप्तसहकारिसन्निधयः स्वं स्वं कार्यमभिनिर्वर्तयन्ति यथा सदैव योगपरिपन्थिनो व्युत्थानदशायाम् ।
एषां प्रत्येकं चतुर्विधानामपि मूलभूतत्वेन स्थिताऽप्यविद्याऽन्वयित्वेन प्रतीयते । न हि क्वचिदपि क्लेशानां विपर्ययान्वयनिरपेक्षाणां स्वरूपमुपलभ्यते । तस्मात् [पा० तस्यां च] मिथ्याज्ञानरूपायामविद्यायां सम्यग्ज्ञानेन निवर्तितायां दग्धबीजकल्पानामेषां न क्वचित् प्ररोहोऽस्ति ।
अतोऽविद्यानिमित्तत्वमविद्यान्वयश्चैतेषां निश्चीयते ।
अतः सर्वेऽप्यविद्याव्यपदेशभाजः । सर्वेषां च क्लेशानां चित्तविक्षेपकारित्वाद्योगिना प्रथममेव तदुच्छेदे यत्नः कार्य इति ॥ ४॥

अविद्यालक्षणमाह ---

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ साधन ५॥

वृत्तिः --- अतस्मिंस्तत्प्रतिभासोऽविद्येत्यविद्यायाः सामान्यलक्षणम् । तस्या एव भेदप्रतिपादनम् --- अनित्येषु घटादिषु नित्यत्वाभिमानोऽविद्येत्युच्यते । एवमशुचिषु कायादिषु शुचित्याभिमानो दुःखेषु विषयेषु सुखाभिमानोऽनात्मशरीर आत्माभिमानः । एतेनापुण्ये पुण्यभ्रमोऽनर्थेऽर्थभ्रमो व्याख्यातः ॥ ५॥

अस्मितां लक्षयितुमाह ---

दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ साधन ६॥

वृत्तिः --- दृक्षक्तिः पुरुषः ।
दर्शनशक्ती रजस्तमोभ्यामनभिभूतः सात्विकः
परिणामोऽन्तःकरणरूपः । अनयोर्भोक्तृभोग्यत्वेन
जडाजडत्वेनात्यन्तभिन्नरूपयोरेकताभिमानोऽस्मितेत्युच्यते ।
यथा प्रकृतिर्वस्तुतः कर्तृत्वभोक्तृत्वरहितापि
कर्त्र्यहमित्यभिमन्यते [पा० यथा प्रकृतिवता कर्तृत्वरहितेनापि
कर्ताहमित्यभिमन्यते] सोऽयमस्मिताख्यो विपर्यासः क्लेशः ॥ ६॥

रागस्य लक्षणमाह ---

सुखानुशयी रागः ॥ साधन ७॥

वृत्तिः --- सुखमनुशेत इति सुखानुशयी । सुखज्ञस्य
सुखानुभूतिपूर्वकः सुखसाधनेषु तृष्णारूपो गर्धो रागसंज्ञकः
क्लेशः ॥ ७॥

द्वेषलक्षणमाह ---

दुःखानुशयी द्वेषः ॥ साधन ८॥

वृत्तिः --- दुःखमुक्तलक्षणम् । तदभिज्ञस्य
तदनुस्मृतिपूर्वकं तत्साधनेष्वनभिलषतो योऽयं निन्दात्मकः
क्रोधः स द्वेषलक्षणः क्लेशः ॥ ८॥

अभिनिवेशस्य लक्षणमाह ---

स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ॥ साधन ९॥

वृत्तिः --- पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलाद्भयरूपः
समुपजायमानः शरीरविषयादिभिर्मम वियोगो मा
भूदित्यन्वहमनुबन्धरूपः सर्वस्यैवाऽऽकृमेर्ब्रह्मपर्यन्तं
निमित्तमन्तरेण प्रवर्तमानोऽभिनिवेशाख्यः क्लेशः ॥ ९॥

तदेवं व्युत्थानस्य क्लेशात्मकत्वादेकाग्रताऽभ्यासकामेन प्रथमं क्लेशाः परिहर्तव्याः । न चाज्ञातानां तेषां परिहारः कर्तुं शक्य इति तज्ज्ञानाय तेषामुद्देशं लक्षणं क्षेत्रं विभागं चाभिधाय स्थूलसूक्ष्मभेदभिन्नानां तेषां प्रहाणोपायविभागमाह ---

ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ साधन १०॥

वृत्तिः --- ते सुक्ष्माः क्लेशाः ये वासनारूपेणैव स्थिताः स्ववृत्तिरूपं परिणामं नारभन्ते । ते प्रतिप्रसवेन प्रतिलोमपरिणामेन हेयास्त्यक्तव्याः । स्वकारणेऽस्मितायां कृतार्थं सवासनं चित्तं यदा प्रविष्टं भवति तदा कुतस्तेषां निर्मूलानां सम्भवः ॥ १०॥

स्थूलानां हानोपायमाह ---

ध्यानहेयास्तद्वृत्तयः ॥ साधन ११॥

वृत्तिः --- तेषां क्लेशानामारब्धकार्याणां याः सुखदुःखमोहात्मिका वृत्तयस्ता ध्यानहेयाः । ध्यानेनैव चित्तैकाग्रतालक्षणेन हातव्या इत्यर्थः । चित्तपरिकर्माभ्यासमात्रेणैव स्थूलत्वात् तासां निवृत्तिर्भवति । यथा वस्त्रादौ स्थूलो मलः प्रक्षालनमात्रेणैव निवर्तते । यस्तत्र सूक्ष्मांशः स तैस्तैरुपायैरुत्तापनप्रभृतिभिरेव निवर्तयितुं शक्यते ॥ ११॥

एवं क्लेशानां तत्त्वमभिधाय कर्माशयस्य तदभिधातुमाह ---

क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ साधन १२॥

वृत्तिः --- कर्माशय इत्यनेन स्वरूपं तस्याभिहितम् । अतो वासनारूपाण्येव कर्माणि । क्लेशमूल इत्यनेन कारणमभिहितं यतः कर्मणां शुभाशुभानां क्लेशा एव निमित्तम् । दृष्टादृष्टजन्मवेदनीय इत्यनेन फलमुक्तम् । अस्मिन्नेव जन्मनि अनुभवनीयो दृष्टजन्मवेदनीयः । जन्मान्तरानुभवनीयोऽदृष्टजन्मवेदनीयः ।
तथाहि --- कानिचित् पुण्यानि देवताराधनादीनि तीव्रसंवेगेन कृतानि इहैव जन्मनि जात्यायुर्भोगलक्षणं फलं प्रयच्छन्ति यथा नन्दीश्वरस्य भगवन्महेश्वराराधनबलादिहैव जन्मनि जात्यादयो विशिष्टाः प्रादुर्भूताः । एवमन्वेषां विश्वामित्रादीनां

तपःप्रभावाज्जात्यायुषी । केषाञ्चिज्जातिरेव यथा तीव्रसंवेगेन दुष्टकर्मकृतां नहुषादीनां जात्यन्तरादिपरिणामः । उर्वश्याश्च कार्तिकेयवने लतारूपतया । एवं व्यस्तसमस्तत्वेन यथायोग्यं योज्यमिति ॥ १२॥

इदानीं कर्माशयस्य स्वभेदभिन्नं फलमाह ---

सति मूले तद्विपाको जात्यायुर्भोगाः ॥ साधन १३॥

वृत्तिः --- मूलमुक्तलक्षणाः क्लेशाः । तेष्वनभिभूतेषु सत्सु कर्मणां कुशलाकुशलरूउपाणां विपाकः फलं जात्यायुर्भोगा भवन्ति । जातिर्मनुष्यादिः । आयुश्चिरकालमेकशरीरसम्बन्धः । भोगा विषया इन्द्रियाणि सुखसंविद्दुःखसंविच्च सुखदुःखादीनि कर्मकरणभावबोधनव्युत्पत्या भोगशब्दस्य । इदमत्र तात्पर्यम् --- चित्तभूमावनादिकालसञ्चिताः कर्मवासना यथा यथा पाकमुपयान्ति तथा तथा गुणप्रधानभावेन स्थिता जात्यायुर्भोगलक्षणं स्वकार्यमारभन्ते ॥ १३॥

उक्तानां कर्मफलत्वेन जात्यादीनां स्वकारणकर्मानुसारिणां कार्यकर्तृत्वमाह ---

ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ साधन १४॥

वृत्तिः --- ह्लादः सुखम् परितापो दुःखं तौ फलं येषां ते तथोक्ताः । पुण्यं कुशलं कर्म तद्विपरीतमपुण्यं ते कर्मणी कारणं येषां तेषां भावस्तस्मात् । एतदुक्तं भवति --- पुण्यकर्मारब्धा जात्यायुर्भोगा ह्लादफलाः । अपुण्यकर्मारब्धास्तु परितापफलाः । एतच्च प्राणिमात्रापेक्षया द्वैविध्यम् ॥ १४॥

योगिनस्तत्सर्वं दुःखमित्याह ---

परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ साधन १५॥

वृत्तिः --- विवेकिनः परिज्ञातक्लेशादिविवेकस्य दृश्यमात्रं सकलमेव भोगसाधनं सविषं स्वाद्वन्नमिव दुःखमेव प्रतिकूलवेदनीयमेवेत्यर्थः । यस्मादत्यन्ताभिजातो योगी दुःखलेशेनाप्युद्विजते । यथा --- अक्षिपात्रमूर्णातन्तुस्पर्शमात्रेणैव महतीं पीडामनुभवति

नेतरदङ्गं तथा विवेकी स्वल्पदुःखानुबन्धेनाप्युद्विजते ।
कथमित्याह --- परिणामतापसंस्कारदुःखैः ।
विषयाणामुपभुज्यमानानां यथायथं
गर्धाभिवृद्धेस्तदप्राप्तिकृतस्य सुखदुःखस्यापरिहार्यतया
दुःखान्तरसाधनत्वान्नास्त्येव सुखरूपतेति परिणामदुःखत्वम् ।
उपगृह्यमाणेषु सुखसाधनेषु तत्प्रतिपन्थिनं प्रति द्वेषस्य
सर्वदैवावस्थितत्वात् सुखानुभवकालेऽपि तापदुःखं दुष्परिहरमिति
तापदुःखता ।
संस्कारदुःखं तु स्वाभिमतानभिमतविषयसन्निधाने
सुखसंविद्दुःखसंविच्चोपजायमाना तथाविधमेव स्वक्षेत्रे
संस्कारमारभते । संस्काराच्च पुनस्तथाविधसंविदनुभव
इत्यपरिमितसंस्कारोत्पत्तिद्वारेण सर्वस्यैव दुःखानुवेधाद्दुःखत्वम् ।
एवमुक्तं भवति --- क्लेशकर्माशयविपाकसंस्कारानुच्छेदात्
सर्वस्यैव दुःखत्वम् ।
गुणवृत्तिविरोधाच्चेति । गुणानां सत्वरजस्तमसां या वृत्तयः
सुखदुःखमोहरूपाः परस्परमभिभाव्याभिभावकत्वेन विरुद्धा जायन्ते ।
तासां सर्वत्रैव दुःखानुवेधाद् दुःखत्वम् ।
एतदुक्तं भवति --- ऐकान्तिकीमात्यन्तिकीं च दुःखनिवृत्तिमिच्छतो
विवेकिन उक्तरूपकारणचतुष्टयाः सर्वे विषया दुःखरूपतया
प्रतिभान्ति । तस्माच्च सर्वकर्मविपाको दुःखरूप एवेत्युक्तं भवति ॥ १५॥

तदेवमुक्तस्य क्लेशकर्माशयविपाकराशेरविद्याप्रभवत्वादविद्यायाश्च
मिथ्याज्ञानरूपतया सम्यग्ज्ञानोच्छेद्यत्वात् सम्यग्ज्ञानस्य च
ससाधनहेयोपादेयावधारणरूपत्वात् तदभिधानमाह ---

हेयं दुःखमनागतम् ॥ साधन १६॥

वृत्तिः --- भूतस्यातिक्रान्तत्वादनुभूयमानस्य
त्यक्तुमशक्यत्वादनागतमेव संसारदुःखं हातव्यमित्युक्तं भवति ॥ १६॥

हेयहेतुमाह ---

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ साधन १७॥

वृत्तिः --- द्रष्टा चिद्रूपः पुरुषः । दृश्यं बुद्धिसत्त्वं ।
तयोरविवेकख्यातिपूर्वको योऽसौ संयोगो भोक्तृभोग्यत्वेन
सन्निधानं स हेयस्य दुःखस्य गुणपरिणामरूपस्य संसारस्य हेतुः
कारणम् । तन्निवृत्या संसारनिवृत्तिर्भवतीत्यर्थः ॥ १७॥

द्रष्टृदृश्ययोः संयोग इत्युक्तम् । तत्र दृश्यस्य स्वरूपं कार्यं प्रयोजनं चाह ---

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ साधन १८॥

वृत्तिः --- प्रकाशः सत्त्वस्य धर्मः । क्रिया प्रवृत्तिरूपा रजसः । स्थितिर्नियमरूपा तमसः । ताः प्रकाशक्रियास्थितयः शीलं स्वाभाविकं रूपं यस्य तत्तथाविधमिति स्वरूपमस्य निर्दिष्टम् । भूतेन्द्रियात्मकमिति । भूतानि स्थूलसूक्ष्मभेदेन द्विविधानि पृथिव्यादीनि गन्धतन्मात्रादीनि च । इन्द्रियाणि बुद्धीन्द्रियकर्मेन्द्रियान्तःकरणभेदेन त्रिविधानि । उभयमेतद्ग्राह्यग्रहणरूपात्मा स्वरूपाभिन्नः परिणामो यस्य तत्तथाविधमित्यनेनास्य कार्यमुक्तम् । भोगः कथितलक्षणः । अपवर्गो विवेकख्यातिपूर्विका संसारनिवृत्तिः । तौ भोगापवर्गवर्थः प्रयोजनं यस्य तत्तथाविधं दृश्यमित्यर्थः ॥ १८॥

तस्य दृश्यस्य नानावस्थारूपपरिणामात्मकस्य हेयत्वेन ज्ञातव्यत्वात् तदवस्थाः कथयितुमाह ---

विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ साधन १९॥

वृत्तिः --- गुणानां पर्वाण्यवस्थाविशेषाश्चत्वारो ज्ञातव्या इत्युपदिष्टं भवति । तत्र विशेषा महाभूतेन्द्रियाणि । अविशेषास्तन्मात्रान्तःकरणानि । लिङ्गमात्रं बुद्धिः । अलिङ्गमव्यक्तमित्युक्तम् । सर्वत्र त्रिगुणरूपस्याव्यक्तस्यान्वयित्वेन प्रत्यभिज्ञानादवश्यं ज्ञातव्यत्वेन योगकाले चत्वारि पर्वाणि निर्दिष्टानि ॥ १९॥

एवं हेयत्वेन दृश्यस्य प्रथमं ज्ञातव्यत्वात् तदवस्थासहितं व्याख्यायोपादेयं द्रष्टारं व्याख्यातुमाह ---

द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ साधन २०॥

वृत्तिः --- द्रष्टा पुरुषो दृशिमात्रश्चेतनामात्रम् । मात्रग्रहणं धर्मधर्मिनिरासार्थम् । केचिद्धि चेतनामात्मनो धर्ममिच्छन्ति । स शुद्धोऽपि परिणामित्वाद्यभावेन स्वप्रतिष्ठोऽपि प्रत्ययानुपश्यः । प्रत्यया विषयोपरक्तानि विज्ञानानि तानि अनु

अव्यवधानेन प्रतिसंक्रमाद्यभावेन पश्यति । एतदुक्तं भवति --- जातविषयोपरागायामेव बुद्धौ सन्निधिमात्रेणैव पुरुषस्य द्रष्टृत्वमिति ॥ २०॥

स एव भोक्तेत्याह ---

तदर्थ एव दृश्यस्यात्मा ॥ साधन २१॥ [ तदर्थः एव ]

वृत्तिः --- दृश्यस्य प्रागुक्तलक्षणस्य य आत्मा यत् स्वरूपं तदर्थ एव । तस्य पुरुषार्थभोक्तृत्वसम्पादनं नाम स्वार्थपरिहारेण प्रोयोजनम् । न हि प्रधानं प्रवर्तमानमात्मनः किञ्चित् प्रयोजनमपेक्ष्य प्रवर्तते किन्तु पुरुषस्य भोक्तृत्वं सम्पादयितुमिति ॥ २१॥

यद्येवं पुरुष्स्य भोगसम्पादनमेव प्रोयोजनं तदा स्म्पादिते तस्मिंस्तन्निष्प्रयोजनं विरतव्यापारं स्यात् । तस्मिंश्च परिणामशून्ये शुद्धत्वात् सर्वे द्रष्टारो बन्धरहिताः स्युः । ततश्च संसारोच्छेद इत्याशङ्क्याह ---

कृतार्थं प्रति नष्टमप्यन्ष्टं तदन्यसाधारणत्वात् ॥ साधन २२॥

वृत्तिः --- यद्यपि विवेकख्यातिपर्यन्ताद्भोगसम्पादनात् कमपि कृतार्थं पुरुषं प्रति तन्नष्टं विरतव्यापारं तथापि सर्वपुरुषसाधारणत्वादन्यान् प्रत्यनष्टव्यापारमवतिष्ठते । अतः प्रधानस्य सकलभोक्तृसाधारणत्वान्न कदाचिदपि विनाशः । एकस्य मुक्तौ वा न सर्वमुक्तिप्रसङ्ग इत्युक्तं भवति ॥ २२॥

दृश्यद्रष्टारौ व्याख्याय संयोगं व्याख्यातुमाह ---

स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ साधन २३॥

वृत्तिः --- कार्यद्वारेणास्य लक्षणं करोति । स्वशक्तिर्दृश्यस्य स्वभावः । स्वामिशक्तिर्द्रष्टुः स्वरूपम् । तयोर्द्वयोरपि संवेद्यसंवेदकत्वेन व्यवस्थितयोर्या स्वरूपोपलब्धिस्तस्याः कारणं यः स संयोगः । स च सहजो भोग्यभोक्तृभावस्वरूपानन्यः [ पा० स च सहजभोग्यभोक्तृभावस्वरूपान्नान्यः] । न हि तयोर्नित्ययोर्व्यापकयोः स्वरूपादतिरिक्तः कश्चित् संयोगः । यदेव भोग्यस्य भोग्यत्वं भोक्तुश्च भोक्तृत्वमनादिसिद्धं स एव संयोगः ॥ २३॥

तस्यापि कारणमाह ---

तस्य हेतुरविद्या ॥ साधन २४॥

वृत्तिः --- या पूर्वं विपर्यासात्मिका मोहरूपाऽविद्या व्याख्याता (२।४-५) सा तस्याविवेकख्यातिरूपस्य संयोगस्य कारणम् ॥ २४॥

हेयं हानिक्रियाकर्मोच्यते । किं पुनस्तद्धानमित्याह ---

तदभावे संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ साधन २५॥

वृत्तिः --- तस्या अविद्यायाः स्वरूपविरुद्धेन सम्यग्ज्ञानेनोन्मूलिताया योऽयमभावस्तस्मिन् सति तत्कार्यस्य संयोगस्याप्यभावस्तद्धानमित्युच्यते । अयमर्थः --- नैतस्याऽमूर्तवस्तुनो विभागो युज्यते [पा० नैतस्य मूर्तद्रव्यवत् परित्यागो युज्यते] किन्तु जातायां विवेकख्यातवविवेकनिमित्तः संयोगः स्वयमेव निवर्तत इति तस्य हानम् । यदेव च संयोगस्य हानं तदेव नित्यं केवलस्यापि पुरुषस्य कैवल्यं व्यपदिश्यते ॥ २५॥

तदेवं दृश्यसंयोगस्य स्वरूपं कारणं कार्यं चाभिहितम् । अथ हानोपायकथनद्वारेण उपादेयकारणमाह ---

विवेकख्यातिरविप्लवा हानोपायः ॥ साधन २६॥

वृत्तिः --- अन्ये गुणा अन्यः पुरुष इत्येवंविधस्य विवेकस्य या ख्यातिः प्रख्या साऽस्य हानस्य दृश्यदुःखपरित्यागस्योपायः कारणम् । कीदृशी । अविप्लवा न विद्यते विप्लवो विच्छेदोऽन्तराऽन्तराऽभ्युत्थानरूपो यस्याः सा अविप्लवा । इदमत्र तात्पर्यम् --- प्रतिपक्षभावनाबलादविद्याप्रलये विनिवृत्तकर्तृत्वभोक्तृत्वाभिमानाया रजस्तमोमलानभिभूताया बुद्धेरन्तर्मुखा या चिच्छायासंक्रान्तिः सा विवेकख्यातिरुच्यते । तस्यां च सन्ततत्वेन प्रवृत्तायां सत्यां दृश्यस्याधिकारनिवृत्तेर्भवत्येव कैवल्यम् ॥ २६॥

उत्पन्नविवेकख्यातेः पुरुषस्य यादृशी प्रज्ञा भवति तां कथयन् विवेकख्यातेरेव स्वरूपमाह ---

तस्य सप्तधा प्रान्तभूमौ प्रज्ञा ॥ साधन २७॥

[तस्य सप्तधा प्रान्तभूमिः प्रज्ञा इति वा बहुसम्मतः सूत्रपाठः । ]

वृत्तिः --- तस्योत्पन्नविवेकज्ञानस्य ज्ञातव्यविवेकरूपा प्रज्ञा प्रान्तभूमौ सकलसालम्बनसमाधिपर्यन्ते सप्तप्रकारा भवन्तीत्यर्थः ।
तत्र कार्यविमुक्तिरूपा चतुष्प्रकारा --- १। ज्ञातं मया ज्ञेयम् । ज्ञातव्यं न किञ्चिदस्ति । २। क्षीणा मे क्लेशाः । न किञ्चित् क्षेतव्यमस्ति । ३। अधिगतं मया ज्ञानम् । ४। प्राप्ता मया विवेकख्यातिरिति । प्रत्ययान्तरपरिहारेण तस्यामवस्थायामीदृश्येव प्रज्ञा जायते । ईदृशी प्रज्ञा कार्यविषयं निर्मलं ज्ञानं कार्यविमुक्तिरित्युच्यते ।
चित्तविमुक्तिस्त्रिधा --- ५। चरितार्था मे बुद्धिः । गुणा हृताधिकारा गिरिशिखरनिपतिता इव ग्रावाणो न पुनः स्थितिं यास्यन्ति । ६। स्वकारणे प्रविलयाभिमुखानां गुणानां मोहाभिधानमूलकारणाभावान्निष्प्रयोजनत्वाच्चामीषां कुतः प्ररोहो भवेत् । ७। स्वस्थीभूतश्च [पा० सात्मीभूतश्च] मे समाधिस्तस्मिन् सति स्वरुपप्रतिष्ठोऽहमिति । ईदृशी त्रिप्रकारा चित्तविमुक्तिः । तदेवमीदृश्यां सप्तविधभूमिप्रज्ञायामुपजातायां पुरुषः केवल इत्युच्यते ॥ २७॥

विवेकख्यातिः संयोगाभावहेतुरित्युक्तम् । तस्यास्तु उत्पत्तौ किं निमित्तमित्याह ---

योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ साधन २८॥

वृत्तिः --- योगाङ्गानि वक्ष्यमाणानि । तेषामनुष्ठानाज्ज्ञानपूर्वकाभ्यासादाविवेकख्यातेरशुद्धिक्षये चित्तसत्त्वस्य प्रकाशावरणरूपक्लेशात्मकाशुद्धिक्षये या ज्ञानदीप्तिस्तारतम्येन सात्त्विकः परिणामो विवेकख्यातिपर्यन्तस्तस्याः ख्यातेर्हेतुरित्यर्थः ॥ २८॥

योगाङ्गानामनुष्ठानादशुद्धिक्षय इत्युक्तम् । कानि पुनस्तानि योगाङ्गानीति तेषामुद्देशमाह ---

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ साधन २९॥

कर्मफलभोगायाऽऽत्मीयनिरतिशयविभूत्यनुभवाद् युगपदनेकशरीरनिर्मित्सा जायते तदा कुतस्तानि चित्तानि प्रभवन्तीत्याह ---

निर्माणचित्तान्यस्मितामात्रात् ॥ कैवल्य ४॥

वृत्तिः --- योगिनः स्वयं निर्मितेषु कायेषु यानि चित्तानि तानि मूलकारणादस्मितामात्रादेव तदिच्छया प्रसरन्ति । अग्नेर्विस्फुलिङ्गा इव युगपत् परिणमन्ति ॥ ४॥

ननु बहूनां चित्तानां भिन्नाभिप्रायत्वान्नैककार्यकर्तृत्वं स्यादित्याह ---

प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ कैवल्य ५॥

वृत्तिः --- तेषामनेकेषां चेतसां प्रवृत्तिभेदे व्यापारनानात्व एअकं योगिनश्चित्तं प्रयोजकं प्रेरकमधिष्ठातृत्वेन । तेन न भिन्नमतत्वम् । अयमर्थः --- यथात्मीयशरीरे मनश्चक्षुःपाण्यादीनि यथेच्छं प्रेरयत्यधिष्ठातृत्वेनैएवं कायान्तरेष्वपीति ॥ ५॥

जन्मादिप्रभवत्वात् सिद्धीनां चित्तमपि तत्प्रभवं पञ्चविधमेव । अतो जन्मादिप्रभवाच्चित्तात् समाधिप्रभवस्य चित्तस्य वैलक्षण्यमाह ---

तत्र ध्यानजमनाशयम् ॥ कैवल्य ६॥

वृत्तिः --- ध्यानजं समाधिजं यच्चित्तं तत् पञ्चसु मध्येऽनाशयं कर्मवासनारहितमित्यर्थः ॥ ६॥

यथेतरचित्तेभ्यो योगिनश्चित्तं विलक्षणं क्लेशादिरहितं तथा कर्मापि विलक्षणमित्याह ---

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ कैवल्य ७॥

वृत्तिः --- शुभफलदं कर्म यागादि शुक्लम् । अशुभफलदं ब्रह्महत्यादि कृष्णम् । उभयसंकीर्णं शुक्लकृष्णम् । तत्र शुक्लं कर्म विचक्षणानां दानतपःस्वाध्यायादिमतां पुरुषाणाम् ।

कृष्णं कर्म दानवानाम् [ नारकानाम् ] । शुक्लकृष्णं मनुष्याणाम् । योगिनान्तु संन्यासवतां त्रिविधकर्मविपरीतं यत् फलत्यागानुसन्धानेनैवानुष्ठानान्न किञ्चित् फलमारभते ॥ ७॥

अस्यैव कर्मणः फलमाह ---

ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ कैवल्य ८॥

वृत्तिः --- इह हि द्विविधा कर्मवासनाः स्मृतिमात्रफला जात्यायुर्भोगफलाश्च । तत्र जात्यायुर्भोगफला एकानेकजन्मभवा इत्यनेन पूर्वमेव (२।१२--१३) कृतनिर्णयाः । यास्तु स्मृतिमात्रफलास्तास्ततः कर्मणो येन कर्मणा यादृक् शरीरमारब्धं देवमनुष्यतिर्यगादिभेदेन तस्य विपाकस्याऽनुगुणा अनुरूपा या वासनास्तासामेव तस्मादभिव्यक्तिर्वासनानां भवति । अयमर्थः --- येन कर्मणा पूर्वं देवतादिशरीरमारब्धं जात्यन्तरशतव्यवधानेन पुनस्तथाविधस्यैव शरीरस्यारम्भे तदनुरूपा एव स्मृतिफला वासनाः प्रकटीभवन्ति । लोकान्तरेष्वेवार्थेषु तस्य स्मृत्यादयो जायन्ते । इतरास्तु सत्योऽपि अव्यक्तसंज्ञास्तिष्ठन्ति न तस्यां दशायां नारकादिशरीरोद्भवा वासना व्यक्तिमायान्ति ॥ ८॥

आसामेव वासनानां कार्यकारणाभावानुपपत्तिमाशङ्क्य समर्थयितुमाह ---

जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ कैवल्य ९॥

वृत्तिः --- इह नानायोनिषु भ्रमतां संसारिणां कांचिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन पुनस्तामेव योनिं प्रतिपद्यते तदा तस्यां पूर्वानुभूतायां योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासना याः प्रकटीभूता आसंस्तास्तथाविधव्यञ्जकाभावात्तिरोहिताः पुनस्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति । जातिदेशकालव्यवधानेऽपि तासां स्वानुरूपस्मृत्यादिफलसाधन आनन्तर्यं नैरन्तर्यम् । कुतः । स्मृतिसंस्कारयोरेकरूपत्वात् । तथाहि ---
अनुष्ठीयमानात् कर्मणश्चित्तसत्त्वे वासनारूपः संस्कारः समुत्पद्यते । स च स्वर्गनरकादीनां फलानां चाङ्कुरीभावः कर्मणां वा यागादीनां शक्तिरूपतयाऽवस्थानम् । कर्तुर्वा तथाविधभोग्यभोक्तृत्वरूपं सामर्थ्यम् । संस्कारात् स्मृतिः स्मृतेश्च सुखदुःखोपभोगस्तदनुभवाच्च पुनरपि

संस्कारस्मृत्यादयः । एवं च यस्य स्मृतिसंस्कारादयो भिन्नास्तस्याऽऽनन्तर्याभावे दुर्लभः कार्यकारणभावः । अस्माकं तु यदानुभव एव संस्कारीभवति संस्कारश्च स्मृतिरूपतया परिणमते तदैकस्यैव चित्तस्यानुसन्धातृत्वेन स्थितत्वान्न कार्यकारणभावो दुर्घटः ॥ ९॥

भवत्वानन्तर्यं कार्यकारणभावश्च वासनानाम् यदा तु प्रथममेवानुभवः प्रवर्तते तदा किं वासनानिमित्त उत निर्निमित्त इति शङ्कां व्यपनेतुमाह ---

तासामनादित्वं चाऽऽशिषो नित्यत्वात् ॥ कैवल्य १०॥

वृत्तिः --- तासां वासनानामनादित्वम् । न विद्यत आदिर्यस्य तस्य भावस्तत्त्वं तासामादिर्नास्तीत्यर्थः । कुत इति । आशिषो नित्यत्वात् । येयमाशीर्महामोहरूपा सदैव सुखसाधनानि मे भूयासुर्मा कदाचन तैर्मे वियोगो भूदिति यः संकल्पविशेषो वासनानां कारणं तस्य नित्यत्वादनादित्वमित्यर्थः । एतदुक्तं भवति --- कारणस्य सन्निहितत्वादनुभवसंस्कारादीनां कार्याणां प्रवृत्तिः केन वार्यते । अनुभवसंस्कारानुबिद्धं संकोचविकाशधर्मि चित्तं तत्तदभिव्यञ्जकविपाकलाभात् तत्तत्फलरूपतया परिणमत इत्यर्थः ॥ १०॥

तासामानन्त्याद्धानं कथं भवतीत्याशङ्क्य हानोपायमाह ---

हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ कैवल्य ११॥

वृत्तिः --- वासनानामनन्तरानुभवो हेतुस्तस्याप्यनुभवस्य रागादयस्तेषामविद्येति साक्षात् पारम्पर्येण हेतुः । फलं शरीरादि स्मृत्यादि च । आश्रयो बुद्धिसत्त्वम् । आलम्बनं यदेवानुभवस्य तदेव वासनानाम् । अतस्तैर्हेतुफलाश्रयालम्बनैरनन्तानामपि वासनानां संगृहीतत्वात् । एषां हेत्वादीनामभावे ज्ञानयोगाभ्यां दग्धबीजकल्पत्वे विहिते निर्मूलत्वान्न वासनाः प्ररोहन्ति न कार्यमारभन्त इति तासामभावः ॥ ११॥

ननु प्रतिक्षणं चित्तस्य नश्वरत्वोपलब्धेर्वासनानां तत्फलानां च कार्यकारणभावेन युगपदभावित्वाद्भेदे कथमेकत्वमित्याशङ्क्यैकत्वसमर्थनायाह ---

अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ कैवल्य १२॥

वृत्तिः ---इहात्यन्तमसतां भावानामुत्पत्तिर्न युक्तिमती
तेषां सत्त्वसम्बन्धायोगात् । न हि शशविषाणादीनां क्वचिदपि
सत्त्वसम्बन्धो दृष्टः । निरुपाख्ये च कार्ये किमुद्दिश्य कारणानि
प्रवर्तेरन् । न ह्यसन्तं विषयमालोच्य कश्चित् प्रवर्तते । सतामपि
विरोधान्नाभावसम्बन्धोऽस्ति । यत् स्वरूपं लब्धसत्ताकं तत् कथं
निरुपाख्यतामभावरूपतां वा भजते न विरुद्धं रूपं स्वीकरोतीत्यर्थः
।
तस्मात् सतामभावासम्भवादसतां चोत्पत्त्यसम्भवात्
तैस्तैर्धर्मैर्विपरिणममानो धर्मी सदैकरूप एवावतिष्ठते ।
धर्मास्तु त्र्यध्वकत्वेन [ पा० अधिकत्वेन ] त्रैकालिकत्वेन
तत्र व्यवस्थिताः स्वस्मिन् स्वस्मिन्नध्वनि व्यवस्थिताः न
स्वरूपं त्यजन्ति । वर्तमानेऽध्वनि व्यवस्थिताः केवलं
भोग्यतां भजन्ते । तस्माद्धर्माणामेवातीतानागताद्यध्वभेदात्
तेनैव रूपेण कार्यकारणभावोऽस्मिन् दर्शने प्रतिपद्यते ।
तस्मादपवर्गपर्यन्तमेकमेव चित्तं धर्मितयाऽनुवर्तमानं न
निह्नोतुं पार्यते ॥ १२॥

त एते धर्मधर्मिणः किंरूपा इत्याह ---

ते व्यक्तसूक्ष्मा गुणात्मानः ॥ कैवल्य १३॥

वृत्तिः --- य एते धर्मधर्मिणः
प्रोक्तास्ते व्यक्तसूक्ष्मभेदेन व्यवस्थिताः गुणाः
सत्त्वरजस्तमोरूपास्तदात्मानस्तत्स्वभावास्तत्परिणामरूपा इत्यर्थः ।
यतः सत्त्वरजस्तमोभिः सुखदुःखमोहरूपैः सर्वासां
बाह्याभ्यन्तरभेदभिन्नानां भावव्यक्तीनामन्वयानुगमो दृश्यते ।
यद्यदन्वयि तत्तत् परिणामरूपं दृष्टम् । यथा घटादयो
मृदन्विता मृत्परिणामरूपाः ॥ १३॥

यद्येते त्रयो गुणाः सर्वत्र मूलकारणं कथमेको धर्मीति व्यपदेश
इत्याशङ्क्याह ---

परिणामैकत्वाद्वस्तुतत्त्वम् ॥ कैवल्य १४॥

वृत्तिः --- यद्यपि त्रयो गुणास्तथापि
तेषामङ्गाङ्गिभावगमनलक्षणो यः परिणामः

क्वचित् सत्त्वमङ्गि क्वचिद्रजः क्वचिच्च तम इत्येवंरूपस्तस्यैकत्वाद्वस्तुनस्तत्त्वमेकमुच्यते । यथा --- इयं पृथिवी । अयं वायुरित्येवमादि ॥ १४॥

ननु ज्ञानव्यतिरिक्ते सत्यर्थे वस्त्वेकमनेकं वा वक्तुं युज्यते । यदा च विज्ञानमेव वासनावशात् कार्यकारणभावेनावस्थितं तथा तथा प्रतिभाति तदा कथमेतच्छक्यते वक्तुमित्याशङ्क्याह ---

वस्तुसाम्ये चित्तभेदात्तयोर्विविक्तः पन्थाः ॥ कैवल्य १५॥

वृत्तिः --- तयोर्ज्ञानार्थयोर्विविक्तः पन्था विविक्तो मार्गो देश इति यावत् । कथम् । वस्तुसाम्ये चित्तभेदात् । समाने वस्तुनि स्त्र्यादावुपलभ्यमाने नानाप्रमातृईणां चित्तस्य भेदः सुखदुःखमोहरूपतया समुपलभ्यते । तथाहि एकस्यां रूपलावण्यवत्यां योषिति उपलभ्यमानायां सरागस्य सुखमुत्पद्यते सपत्न्यास्तु द्वेषः परिव्राजकादेर्घृणेत्येकस्मिन् वस्तुनि नानाविधचित्तोदयात् कथं चित्तकार्यत्वं वस्तुन एकचित्तकार्यत्वे वस्त्वेकरूपतयैवाऽवभासेत ।
किञ्च चित्तकार्यत्वे वस्तुनो यदीयस्य चित्तस्य तद्वस्तु कार्यं तस्मिन्नर्थान्तरव्यासक्ते तद्वस्तु न किञ्चित् स्यात् । भवत्विति चेन्न । तदेव कथमन्यैर्बहुभिरुपलभ्येत । उपलभ्यते च तस्मान्न चित्तकार्यम् । अथ युगपद्बहुभिः सोऽर्थः क्रियते तदा बहुनिर्मितस्यार्थस्यैकनिर्मिताद्वैलक्षण्यं स्यात् । यदा तु वैलक्षण्यं नेष्यते तदा कारणभेदे सति कार्यभेदस्याभावे निर्हेतुकमेकरूपं वा जगत् स्यात् । एतदुक्तं भवति --- सत्यपि भिन्ने कारणे यदि कार्यस्याभेदस्तदा समग्रं जगन्नानाविधकारणजन्यमेकरूपं स्यात् । कारणभेदाननुगमात् स्वातन्त्र्येण निर्हेतुकं वा स्यात् । यद्येवं कथं तेन त्रिगुणात्मना चित्तेनैकस्यैव प्रमातुः सुखदुःखमोहमयानि ज्ञानानि जन्यन्ते [पा० कथं तेन त्रिगुणात्मनाऽर्थे नैकस्यैव प्रमातुः सुखदुःखमोहभयानि ज्ञानानि न जन्यन्ते] । मैवम् । यथाऽर्थस्त्रिगुणस्तथा चित्तमपि त्रिगुणम् । तस्यार्थप्रतिभासोत्पत्तौ धर्मादयः सहकारिकारणम् । तदुद्भवाभिभववशात् कदाचिच्चित्तस्य तेन तेन रूपेणाभिव्यक्तिः ।
तथा च --- कामुकस्य सन्निहितायां योषिति धर्मसहकृतं चित्तं सत्त्वस्याङ्गितया परिणममानं सुखमयं भवति । तदेवाऽधर्मसहकारि रजसोऽङ्गितया दुःखरूपं सपत्नीमात्रस्य भवति । तीव्राधर्मसहकारितया परिणममानं तमसोऽङ्गित्वेन

कोपनायाः सपत्न्या मोहमयं भवति । तस्माद्विज्ञानव्यतिरेकेणास्ति ग्राह्यार्थः [पा० ग्राह्योऽर्थः] ।
तदेवं विज्ञानार्थयोस्तादात्म्यविरोधान्न कार्यकारणभावः । कारणाभेदे सत्यपि कार्यभेदप्रसङ्गादिति ज्ञानाद्व्यतिरिक्तत्वमर्थस्य व्यवस्थितम् ॥ १५॥

यद्येवं ज्ञानं चेत् प्रकाशकत्वाद्ग्रहणस्वभावमर्थश्च प्रकाश्यत्वाद्ग्राह्यस्वभावस्तदा युगपत् सर्वानर्थान् कथं न गृह्णाति । न स्मरति चेत्याशङ्कां परिहर्तुमाह ---

तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ कैवल्य १६॥

वृत्तिः --- तस्यार्थस्योपरागादाकारसमर्पणाच्चित्ते बाह्यं वस्तु ज्ञातमज्ञातं च भवति । अयमर्थः --- सर्वः पदार्थ आत्मलाभे चित्तं सामग्रीमपेक्षते । नीलादिज्ञानं चोपजायमानमिन्द्रियप्रणालिकया समागतमर्थोपरागं सहकारिकारणत्वेनापेक्षते । व्यतिरिक्तस्यार्थस्य सम्बन्धाभावाद्ग्रहीतुमशक्यत्वात् ।
ततश्च येनैवार्थेनास्य स्वरूपोपरागः कृतस्तमेवार्थं तज्ज्ञानं व्यवहारयोग्यतां नयति । ततः सोऽर्थो ज्ञात उच्यते । येन चाऽऽकारो न समर्पितः स न ज्ञातत्वेन व्यवह्रियते । यस्मिंश्चानुभूतेऽर्थे सादृश्यादिरर्थः संस्कारमुद्बोधयन् सहकारितां प्रतिपद्यते तस्मिन्नेवार्थे स्मृतिरुपजायत इति न सर्वत्र ज्ञानं नापि स्मृतिरिति न कश्चिद्विरोधः ॥ १६॥

यद्येवं प्रमातापि पुरुषो यस्मिन् काले नीलं वेदयते न तस्मिन् काले पीतादिमतश्चित्तसत्त्वस्यापि कदाचित् ग्रहीतृरूपत्वादाकारग्रहणे परिणामित्वं प्राप्तमित्याशङ्कां परिहर्तुमाह ---

सदा ज्ञाताश्चित्तवृत्तयः तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ कैवल्य १७॥

वृत्तिः --- या एताश्चित्तस्य प्रमाणविपर्ययादिरूपा वृत्तयः, तास्तत्प्रभोश्चित्तस्य ग्रहीतुः पुरुषस्य सदा सर्वकालमेव ज्ञाताः [पा० ज़्येयाः] । तस्य चिद्रूपतयाऽपरिणामित्वात् परिणामित्वाभावादित्यर्थः । यद्यसौ परिणामी स्यात् तदा परिणामस्य कादाचित्कत्वात् तासां चित्तवृत्तीनां सदा ज्ञातत्वं नोपपद्येत । अयमर्थः --- पुरुषस्य चिद्रूपस्य सदैवाधिष्ठातृत्वेन व्यवस्थितस्य यदन्तरङ्गं निर्मलं सत्त्वम् तस्यापि सदैवावस्थितत्वाद्येनार्थेनोपरक्तं भवति तथाविधस्यार्थस्य सदैव चिच्छायासंक्रान्तिसद्भावस्तस्यां सत्यां सिद्धं ज्ञातृत्वमिति न

कदाचित् काचित् परिणामित्वाशङ्का ॥ १७॥

ननु चित्तमेव यदि सत्त्वोत्कर्षात् प्रकाशकम् तदा स्वपरप्रकाशरूपत्वादात्मानमर्थं च प्रकाशयतीति तावतैव व्यवहारसमाप्तिः । किं ग्रहीत्रन्तरेणेत्याशङ्कामपनेतुमाह ---

न तत्स्वाभासं दृश्यत्वात् ॥ कैवल्य १८॥

वृत्तिः --- तच्चित्तं स्वाभासं स्वप्रकाशकं न भवति पुरुषवेद्यं भवतीति यावत् । कुतः । दृश्यत्वात् । यत् किल दृश्यं तत् द्रष्टृवेद्यं दृष्टं यथा घटादि । दृश्यं च चित्तं तस्मान्न स्वाभासम् ॥ १८॥

ननु साध्याविशिष्टोऽयं हेतुः । दृश्यत्वमेव चित्तस्यासिद्धम् । किञ्च स्वबुद्धिसंवेदनद्वारेण हिताहितप्राप्तिपरिहाररूपा वृत्तयो दृश्यन्ते । तथाहि --- क्रुद्धोऽहं भीतोऽहमत्र मे राग इत्येवमाद्या संवित् बुद्धेरसंवेदने नोपपद्यत इत्याशङ्कामपनेतुमाह ---

एकसमये चोभयानवधारणम् ॥ कैवल्य १९॥

वृत्तिः --- अर्थस्य संवित्तिरिदन्तया व्यवहारयोग्यतापादनम् । अयमर्थः सुखहेतुर्दुःखहेतुर्वेति । बुद्धेः संविदहमित्येवमाकारेण सुखदुःखरूपतया व्यवहारक्षमतापादनम् । एवंविधं च व्यापारद्वयमर्थप्रत्यक्षकाले न युगपत् कर्तुं शक्यं विरोधात् । न हि विरुद्धयोर्व्यापारयोर्युगपत् सम्भवोऽस्ति । अत एकस्मिन् काल उभयस्य स्वरूपस्याऽर्थस्य चावधारयितुमशक्यत्वान्न चित्तं स्वप्रकाशकं भवति । किन्तु एवंविधव्यापारद्वयनिष्पाद्यस्य फलद्वयस्यासंवेदनाद्बहिर्मुखतयैव स्वनिष्ठत्वेन चित्तस्य स्वयं वेदनादर्थनिष्ठमेव फलं न स्वनिष्ठमित्यर्थः ॥ १९॥

ननु मा भूद्बुद्धेः स्वयं ग्रहणं बुद्ध्यन्तरेण भविष्यतीत्याशङ्क्याह ---

चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ कैवल्य २०॥

वृत्तिः --- यदि हि बुद्धिर्बुद्ध्यन्तरेण वेद्यते साऽपि बुद्धिः

स्वयमबुद्धा बुद्ध्यन्तरं प्रकाशयितुमसमर्थेति तस्या ग्राहकं [ पा० बोधकम् ] बुद्ध्यन्तरं कल्पनीयं तस्याऽप्यन्यदित्यनवस्थानात् पुरुषान्तरेणार्थप्रतीतिर्न स्यात् । न हि प्रतीतवप्रतीतायामर्थः प्रतीतो भवति ।
स्मृतिसंकरश्च प्राप्नोति --- रूपे रसे वा समुत्पन्नायां बुद्धौ तद्ग्राहिकाणामनन्तानां बुद्धीनां समुत्पत्तेर्बुद्धिजनितैः संस्कारैर्यदा युगपद्बह्व्यः स्मृतयः क्रियन्ते तदा बुद्धेरपर्यवसानाद्बुद्धिस्मृतीनां च बह्वीनां युगपदुत्पत्तेः कस्मिन्नर्थे स्मृतिरियमुत्पन्नेति ज्ञातुमशक्यत्वात् स्मृतीनां संकरः स्यात् । इयं रूपे स्मृतिरियं रसे स्मृतिरिति न ज्ञायेत ॥ २०॥

ननु बुद्धेः स्वप्रकाशत्वाभावे बुद्ध्यन्तरे चासंवेदने कथमयं विषयसंवेदनरूपो व्यवहार इत्याशङ्क्य स्वसिद्धान्तमाह ---

चित्तेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ कैवल्य २१॥

वृत्तिः --- पुरुषश्चिद्रूपत्वाच्चितिः साऽप्रतिसंक्रमा । न विद्यते प्रतिसक्रमोऽन्यत्र गमनं यस्याः सा तथोक्ता । अन्येनासङ्कीर्णेति यावत् । यथा गुणा अङ्गाङ्गिभावलक्षणे परिणामे अङ्गिनं गुणं संक्रामन्ति तद्रूपतामिवाऽऽपद्यन्ते । यथा वा लोके परमाणवः प्रसरन्तो विषयमारूपयन्ति [ पा० आरोपयन्ति ] नैवं चितिशक्तिस्तस्याः सर्वदैकरूपतया सुप्रतिष्ठितत्वेन व्यवस्थितत्वात् ।
अतस्तत्सन्निधाने यदा बुद्धिस्तदाकारतामापद्यते चेतनेवोपजायते [ पा० चेतनोपजायते ] बुद्धिवृत्तिप्रतिसक्रान्ता च यदा चिच्छक्तिर्बुद्धिवृत्तिविशिष्टतया संवेद्यते [ पा० बुद्धिवृत्त्यावेशात्तथा सम्पद्यते ] तदा बुद्धेः स्वस्या आत्मनो वेदनं संवेदनं भवतीत्यर्थः ॥ २१॥

इत्थं स्वसंविदितं चित्तं सर्वानुग्रहणसामर्थ्येन सकलव्यवहारनिर्वाहक्षमं भविष्यतीत्याह ---

द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ कैवल्य २२॥

वृत्तिः --- द्रष्टा पुरुषस्तेनोपरक्तं तत्सन्निधानेन तद्रूपतामिव प्राप्नोति दृश्योपरक्तं विषयोपरक्तं गृहीतविषयाकारपरिणामं यदा भवति तदा तदेव चित्तं सर्वार्थग्रहणसमर्थं भवति ।

यथा निर्मलं स्फटिकदर्पणाद्येव प्रतिबिम्बग्रहणसमर्थम् । एवं रजस्तमोभ्यामनभिभूतं सत्त्वं शुद्धत्वाच्चिच्छायाग्रहणसमर्थं भवति । न पुनरशुद्धत्वाद्रजस्तमसी । तन्न्यग्भूतरजस्तमोरूपमङ्गितया सत्त्वं निश्चलप्रदीपशिखाकारं सदैकरूपतया परिणममानं चिच्छायाग्रहणसामर्थ्यादामोक्षप्राप्तेरवतिष्ठते । यथाऽयस्कान्तसन्निधाने लोहस्य चलनमाविर्भवत्येवं चिद्रूपपुरुषसन्निधाने सत्त्वस्याभिव्यङ्ग्यमभिव्यज्यते चैतन्यम् ।
अत एवास्मिन्दर्शने द्वे चिच्छक्ती --- नित्योदिताऽभिव्यङ्ग्या च । नित्योदिता चिच्छक्तिः पुरुषसन्निधानादभिव्यक्तमभिव्यङ्ग्यचैतन्यं सत्त्वम् । अभिव्यङ्ग्या चिच्छक्तिस्तदत्यन्तसन्निहितत्वादन्तरङ्गं पुरुषस्य भोग्यतां प्रतिपद्यते । तदेव शान्तब्रह्मवादिभिः सांख्यैः पुरुषस्य परमात्मनोऽधिष्ठेयं कर्मानुरूपं सुखदुःखभोक्तृतया व्यपदिश्यते ।
यत्त्वनुद्रिक्तत्वादेकस्यापि गुणस्य कदाचित् कस्यचिदङ्गित्वात् त्रिगुणं प्रतिक्षणं परिणममानं सुखदुःखमोहात्मकमनिर्मलं तत्तस्मिन् कर्मानुरूपे शुद्धे सत्त्वे स्वाकारसमर्पणद्वारेण संवेद्यतामापादयति तच्छुद्धमाद्यं चित्तसत्त्वमेवेति प्रतिसङ्क्रान्तचिच्छायमन्यतो गृहीतविषयाकारेण चित्तेनोपढौकितमाकारं चित्सङ्क्रान्तिबलात् चेतनायमानं वास्तवचैतन्याभावेऽपि सुखदुःखस्वरूपं भोगमनुभवति । स एवं भोगोऽत्यन्तसन्निधानेन विवेकाग्रहणादभोक्तुरपि पुरुषस्य भोग इति व्यपदिष्यते । अनेनैवाभिप्रायेण विन्ध्यवासिनोक्तम् --- सत्त्वतप्यत्वमेव पुरुषतप्यत्वमिति । अन्यत्रापि --- प्रतिबिम्बे प्रतिबिम्बमानच्छायासदृशच्छायोद्भवः प्रतिबिम्बशब्देनोच्यते । एवं सत्त्वेऽपि पौरुषेयचिच्छायासदृशचिदभिव्यक्तिः प्रतिसङ्क्रान्तिशव्दार्थ इति ।
ननु प्रतिबिम्बं नाम निर्मलस्य नियतपरिणामस्य निर्मले दृष्टम् । यथा मुखस्य दर्पणे । अत्यन्तनिर्मलस्य व्यापकस्यापरिणामिनः पुरुषस्य तस्मादत्यन्तनिर्मलात् पुरुषादनिर्मले सत्त्वे कथं प्रतिबिम्बनमुपपद्यते ।
उच्यते --- प्रतिबिम्बनस्य स्वरूपमनवगच्छता भवतेदमभ्यधायि । यैव सत्त्वगताया अभिव्यङ्ग्यायाश्चिच्छक्तेः पुरुषस्य सान्निध्यादभिव्यक्तिः सैव प्रतिबिम्बनमुच्यते । यादृशी पुरुषगता चिच्छक्तिस्तच्छायाप्यत्राविर्भवति ।
यदप्युक्तमत्यन्तनिर्मलः पुरुषः कथमनिर्मले सत्त्वे प्रतिसंक्रामतीति तदप्यनैकान्तिकम् । नैर्मल्यादपकृष्टेऽपि

जलादावादित्यादयः प्रतिसंक्रान्ताः समुपलभ्यन्ते ।
यदप्युक्तमनवच्छिन्नस्य नास्ति प्रतिसंक्रान्तिरिति तदप्ययुक्तं व्यापकस्याप्याकाशस्य दर्पनादौ प्रतिसंक्रान्तिदर्शनात् । एवं सति न काचिदनुपपत्तिः प्रतिबिम्बदर्शनस्य ।
ननु सात्त्विकपरिणामरूपे बुद्धिसत्त्वे पुरुषसन्निधानादभिव्यङ्ग्यायाश्चिच्छक्तेर्बाह्याकारसंक्रान्तौ पुरुषस्य सुखदुःखरूपो भोग इत्युक्तम् तदनुपपन्नम् । तदेव चित्तसत्त्वं प्रकृतावपरिणतायां कथं सम्भवति किमर्थश्च तस्याः परिणामः ।
अथोच्येत पुरुषस्यार्थोपभोगसम्पादनं तया कर्तव्यम् । अतः पुरुषार्थकर्तव्यतयाऽस्या युक्त एव परिणामः । तच्चानुपपन्नम् । पुरुषार्थकर्तव्यताया एवानुपपत्तेः । पुरुषार्थो मया कर्तव्य एवंविधोऽध्यवसायः पुरुषार्थकर्तव्यतोच्यते । जडायाश्च प्रकृतेः कथं प्रथममेवंविधोऽध्यवसायः । अस्ति चेदध्यवसायः कथं जडत्वम् ।
अत्रोच्यते --- अनुलोमप्रतिलोमलक्षणपरिणामद्वये सहजं शक्तिद्वयमस्ति । तदेव पुरुषार्थकर्तव्यतोच्यते । सा च शक्तिरचेतनाया अपि प्रकृतेः सहजैव । तत्र महदादिमहाभूतपर्यन्तोऽस्या बहिर्मुखतयाऽनुलोमः परिणामः । पुनः स्वकारणानुप्रवेशनद्वारेणास्मिताऽन्तः परिणामः प्रतिलोमः । इत्थं पुरुषस्य भोगपरिसमाप्तेः [पा० आ भोगपरिसमप्तेः] सहजशक्तिद्वयक्षयात् कृतार्था प्रकृतिर्न पुनः परिणाममारभते । एवंविधायां च पुरुषार्थकर्तव्यतायां जडाया अपि प्रकृतेर्न काचिदनुपपत्तिः ।
ननु यदीदृशी शक्तिः सहजैव प्रधानस्यास्ति तत् किमर्थं मोक्षार्थिभिर्मोक्षाय यत्नः क्रियते । मोक्षस्य चानर्थनीयत्वे तदुपदेशकशास्त्रस्यानर्थक्यं स्यात् । उच्यते --- योऽयं प्रकृतिपुरुषयोरनादिर्भोग्यभोक्तृत्वलक्षणः [ पा० भोक्तृभाबलक्षणः ] सम्बन्धस्तस्मिन् सति व्यक्तचेतनायाः प्रकृतेः कर्तृत्वाभिमानाद्दुःखानुभवे सति कथमियं दुःखनिवृत्तिरात्यन्तिकी मम स्यादिति भवत्येवाध्यवसायः । अतो दुःखनिवृत्त्युपायोपदेशकशास्त्रोपदेशापेक्षाऽस्त्येव प्रधानस्य । तथाभूतमेव कर्मानुरूपं बुद्धिसत्त्वं शास्त्रोपदेशस्य विषयः । दर्शनान्तरेष्वप्येवंविध एवाविद्यास्वभावः शास्त्रेऽधिक्रियते [ अभिधीयते ] ।
स च मोक्षाय प्रयतमान एवंविधशास्त्रोपदेशं सहकारिणमपेक्ष्य मोक्षाख्यं फलमासादयति । सर्वाण्येव कार्याणि प्राप्तायां सामग्र्यामात्मानं लभन्ते । अस्य प्रतिलोमपरिणामद्वारेणैवोत्पाद्यस्य

मोक्षाख्यस्य कार्यस्येदृश्येव सामग्री प्रमाणेन निश्चिता प्रकारान्तरेणानुपपत्तेः । अतस्तां विना कथं भवितुमर्हति । अतः स्थितमेतत् --- संक्रान्तविषयोपरागमभिव्यक्तचिच्छायं बुद्धिसत्त्वं विषयनिश्चयद्वारेण समग्रां लोकयात्रां निर्वाहयतीति । एवंविधमेव चित्तं पश्यन्तो भ्रान्ताः स्वसंवेदनं चित्तं चित्तमात्रं च जगदित्येवं ब्रुवाणाः प्रतिबोधिता भवन्ति ॥ २२॥

ननु यद्येवंविधादेव चित्तात् सकलव्यवहारनिष्पत्तिः कथं प्रमाणशून्यो द्रष्टाऽभ्युपगम्यत इत्याशङ्क्य द्रष्टुः प्रमाणमाह ---

तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ कैवल्य २३॥

वृत्तिः --- तदेव चित्तं संख्यातुमशक्याभिर्वासनाभिश्चित्रमपि नानारूपमपि परार्थं परस्य स्वामिनो भोक्तुर्भोगापवर्गलक्षणमर्थं साधयतीति । कुतः । संहत्यकारित्वात् संहत्य सम्भूय मिलित्वाऽर्थक्रियाकारित्वात् । यच्च संहत्यार्थक्रियाकारि तत् परार्थं दृष्टम् । यथा शयनासनादि । सत्त्वरजस्तमांसि च चित्तलक्षणपरिणामभाञ्जि संहत्यकारीणि चआतः परार्थानि । यः परः स पुरुषः ।
ननु यादृशेन शयनासनादीनां परेण शरीरवता पारार्थ्यमुपलब्धं तद्दृष्टान्तबलेन तादृश एव परः सिध्यति । यादृशश्च भवतां परोऽसंहतरूपोऽभिप्रेतस्तद्विपरीतस्य सिद्धेरयमिष्टविघातकृद्धेतुः ।
उच्यते --- यद्यपि सामान्येन परार्थमात्रे व्याप्तिर्गृहीता तथाऽपि सत्त्वादिविलक्षणधर्मिपर्यालोचनया तद्विलक्षण एव भोक्ता परः सिध्यति । यथा चन्दनावृते शिखरिणि विलक्षणाद्धूमाद्वह्निरनुमीयमान इतरवह्निविलक्षणश्चन्दनप्रभव एव प्रतीयते । एवमिहापि विलक्षणस्य सत्त्वाख्यस्य भोग्यस्य परार्थत्वेऽनुमीयमाने तथाविध एव भोक्ताऽधिष्ठाता परश्चिन्मात्ररूपोऽसंहतः सिध्यति ।
यदि च तस्य परत्वं सर्वोत्कृष्टत्वमेवं प्रतीयते तथापि तामसेभ्यो विषयेभ्यः प्रकृष्यते शरीरं प्रकाशरूपेन्द्रियाश्रयत्वात् । तस्मादपि प्रकृष्यन्ते इन्द्रियाणि । ततोऽपि प्रकृष्टं सत्त्वं प्रकाशरूपम् । तस्यापि यः प्रकाशकः प्रकाश्यविलक्षणः स चिद्रूप एव [ पा० इव ] भवतीति कुतस्तस्य संहतत्वम् ॥ २३॥

इदानीं शास्त्रफलं कैवल्यं निर्णेतुं दशभिः सूत्रैरुपक्रमते ---

विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ कैवल्य २४॥

वृत्तिः --- एवं सत्त्वपुरुषयोरन्यत्वे साधिते यस्तयोर्विशेषं पश्यति --- अयमस्मादन्य इत्येवंरूपम् --- तस्य विज्ञातचित्तरूपसत्त्वस्य चित्ते याऽऽत्मभावभावना सा निवर्तते । चित्तमेव कर्तृ ज्ञातृ भोक्त्रित्यभिमानो निवर्तते ॥ २४॥

तस्मिन् सति किं भवतीत्याह ---

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ कैवल्य २५॥

वृत्तिः --- यदस्याज्ञाननिम्नपथं बहिर्मुखं विषयोपभोगफलं चित्तमासीत्तदिदानीं विवेकनिम्नं विवेकमार्गमन्तर्मुखं कैवल्यप्राग्भारं कैवल्यप्रारम्भं सम्पद्यत इति ॥ २५॥

अस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायाः प्रादुर्भवन्तितेषां हेतुप्रतिपादनद्वारेण त्यागोपायमाह ---

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ कैवल्य २६॥

वृत्तिः --- तस्मिन् समाधौ स्थितस्य छिद्रेष्वन्तरायेषु यानि प्रत्ययान्तराणि व्युत्थानरूपाणि ज्ञानानि प्राग्भूतेभ्यः व्युत्थानानुभवजेभ्यः संस्कारेभ्योऽहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि प्रादुर्भवन्ति । अन्तःकरणोच्छित्तिद्वारेण तेषां हानं कर्तव्यमित्युक्तं भवति ॥ २६॥

हानोपायश्च पूर्वमेवोक्त इत्याह ---

हानमेषां क्लेशवदुक्तम् ॥ कैवल्य २७॥

वृत्तिः --- यथा क्लेशानामविद्यादीनां हानं पूर्वमुक्तम् (२।१०--११) तथा संस्काराणामपि कर्तव्यम् । यथा ते ज्ञानाग्निना प्लुष्टा दग्धबीजकल्पा न पुनश्चित्तभूमौ प्ररोहं लभन्ते तथा संस्कारा अपि ॥ २७॥

एवं च प्रत्ययान्तरान्तरानुदये स्थिरीभूते समाधौ यादृशस्य योगिनः समाधेः प्रकर्षप्राप्तिर्भवति तथाविधमुपायमाह ---

प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ कैवल्य २८॥

वृत्तिः --- प्रसंख्यानं यावतां तत्त्वानां यथाक्रमं व्यवस्थितानां परस्परविलक्षणस्वरूपविभावनम् । तस्मिन् सत्यप्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदये सर्वप्रकारविवेकख्यातेः परिशेषाद्धर्ममेघः समाधिर्भवति । प्रकृष्टमशुक्लकृष्णं धर्मं परमपुरुषार्थसाधकं मेहति सिञ्चतीति धर्ममेघः । अनेन प्रकृष्टधर्मस्यैव ज्ञानहेतुत्वमित्युपपादितं भवति ॥ २८॥

तस्माद्धर्ममेघात् किं भवतीत्याह ---

ततः क्लेशकर्मनिवृत्तिः ॥ कैवल्य २९॥

वृत्तिः --- क्लेशानामविद्यादीनामभिनिवेशान्तानां कर्मणां च शुक्लादिभेदेन त्रिविधानां ज्ञानोदयात् पूर्वपूर्वकारणनिवृत्या निवृत्तिर्भवति ॥ २९॥

तेषु निवृत्तेषु किं भवतीत्याह ---

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ कैवल्य ३०॥

वृत्तिः --- आव्रियते चित्तमेभिरित्यावरणानि क्लेशास्त एव मलास्तेभ्योऽपेतस्य तद्विरहितस्य ज्ञानस्य गगननिभस्यानन्त्यादनवच्छेदाज्ज्ञेयमल्पं गणनास्पदं भवति । अक्लेशेनैव सर्वं ज्ञेयं जानातीत्यर्थः ॥ ३०॥

ततः किमित्याह ---

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ कैवल्य ३१॥

वृत्तिः --- कृतो निष्पादितो भोगापवर्गलक्षणः पुरुषार्थः प्रयोजनं यैस्ते कृतार्थाः । गुणाः सत्त्वरजस्तमांसि । तेषां परिणाम आपुरुषार्थसमाप्तेरानुलोम्येन प्रातिलोम्येनाङ्गाङ्गिभावः स्थितिलक्षणः । तस्य योऽसौ क्रमो वक्ष्यमाणस्तस्य परिसमाप्तिर्निष्ठा । न पुनरुद्भव इत्यर्थः ॥ ३१॥

क्रमस्योक्तस्य लक्षणमाह ---

क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ कैवल्य ३२॥

वृत्तिः --- क्षणोऽल्पीयान् कालस्तस्य योऽसौ प्रतियोगी क्षणविलक्षणः परिणामापरान्तनिर्ग्राह्योऽनुभूतेषु क्षणेषु पश्चात् संकलनबुद्ध्यैव यो गृह्यते स क्षणानां क्रम उच्यते । न ह्यननुभूतेषु क्रमः परिज्ञातुं शक्यः ॥ ३२॥

इदानीं फलभूतस्य कैवल्यस्यासाधारणस्वरूपमाह ---

पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति ॥ कैवल्य ३३॥

[ चितिशक्तिः इति बहुसम्मतः सूत्रपाठः । ]

वृत्तिः --- समाप्तभोगापवर्गलक्षणपुरुषार्थानां गुणानां यः प्रतिप्रसवः प्रतिलोमस्य परिणामस्य समाप्तौ विकारानुद्भवो यदि व चितिशक्तेर्वृत्तिसारूप्यनिवृत्तौ स्वरूपमात्रेऽवस्थानं तत् कैवल्यमुच्यते ॥ ३३॥

तदेवं सिद्ध्यन्तरेभ्यो विलक्षणां सर्वसिद्धिमूलभूतां समाधिसिद्धिमभिधाय जात्यन्तरपरिणामलक्षणस्य च सिद्धिविशेषस्य प्रकृत्यापूरणमेव कारणमित्युपपाद्य धर्मादीनां प्रतिबन्धकनिवृत्तमात्रे एव सामर्थ्यमिति प्रदर्श्य निर्माणचित्तानामस्मितामात्रादुद्भव इत्युक्त्वा तेषां च योगिचित्तमेवाधिष्ठापकमिति प्रदर्श्य योगिचित्तस्य चित्तान्तरवैलक्षण्यमभिधाय तत्कर्मणामलौकिकत्वं चोपपाद्य विपाकानुगुणानां वासनानामभिव्यक्तिसामर्थ्यं कार्यकारणयोश्चैक्यप्रतिपादनेन व्यवहितानामपि वासनानामानन्तर्यमुपपाद्य तासामानन्त्येऽपि हेतुफलादिद्वारेण हानमुपदर्श्य अतीतादिष्वध्वसु धर्माणां सद्भावमुपपाद्य विज्ञानवादं निराकृत्य साकारवादं च प्रतिष्ठाप्य पुरुषस्य ज्ञातृत्वमुक्त्वा चित्तद्वारेण सकलव्यवहारनिष्पत्तिमुपपाद्य पुरुषसत्त्वे प्रमाणमुपदर्श्य कैवल्यनिर्णयाय दशभिः सूत्रैः क्रमेणोपयोगिनोऽर्थानभिधाय शास्त्रान्तरेऽप्येतदेव कैवल्यमित्युपपाद्य कैवल्यस्वरूपं निर्णीतमिति व्याकृतः कैवल्यपादः ।

[ इह श्रीभोजदेवस्य राजमार्तण्डवृत्तिर्वस्तुतः समाप्ता ।
तथाऽपि कतिपयानि पृष्ठानि प्रलापपूर्णानि संयोजितान्यस्मिन् स्थाने केनचित् पाषण्डेनाऽयौक्तिकानि तिरस्कृतानि च सर्वैरपि योगिभिः ।
न केवलं सर्वान्यपि दर्शनानि खण्डितानि किञ्चिद्वेदविरुद्धं मतमपि तेन प्रचारितम् । जिज्ञासोः पाठकस्य कौतूहलनिवृत्त्यर्थमेतानि पृष्ठान्यत्र समाविष्टानि । ]

[ न केवलमस्मद्दर्शने क्षेत्रज्ञः कैवल्यावस्थायामेवंविधश्चिद्रूपः यावद्दर्शनान्तरेष्वपि विमृष्यमाण एवंरूपोऽवतिष्ठते । तथाहि --- संसारदशायामात्मा कर्तृत्वभोक्तृत्वानुसन्धातृत्वमयः प्रतीयतेऽन्यथा यद्ययमेकः क्षेत्रज्ञस्तथाविधो न स्यात्तदा ज्ञानक्षणानामेव पूर्वापरानुसन्धातृशून्यानामात्मभावे नियतः कर्मफलसम्बन्धो न स्यात् कृतहानाकृताभ्यागमप्रसङ्गश्च ।
यदि येनैव शास्त्रोपदिष्टमनुष्ठितं कर्म तस्यैव भोक्तृत्वं भवेत्तदा हिताहितप्राप्तिपरिहाराय सर्वस्य प्रवृत्तिर्घटेत सर्वस्यैव व्यवहारस्य हानोपादानलक्षणस्यानुसन्धानेनैव प्राप्तत्वाज्ज्ञानक्षणानां परस्परभेदेनानुसन्धानशून्यत्वात् तदनुसन्धानाभावे कस्यचिदपि व्यवहारानुपपत्तेः कर्ता भोक्ताऽनुसन्धाता यः स आत्मेति व्यवस्थाप्यते ।
मोक्षदशायां तु सकलग्राह्यग्राहकलक्षणव्यवहाराभावाच्चैतन्यमात्रमेव तस्यावशिष्यते तच्चैतन्यं चितिमात्रत्वेनैवोपपद्यते न पुनरात्मसंवेदनेन । यस्माद्विषयग्रहणसमर्थनमेव चिते रूपं नात्मग्राहकत्वम् । तथाहि --- अर्थश्चित्या गृह्यमाणोऽयमिति गृह्यते स्वरूपं गृह्यमाणमहमिति न पुनर्युगपद्बहिर्मुखताऽन्तर्मुखतालक्षणव्यापारद्वयं परस्परविरुद्धं कर्तुं शक्यम् । अत एकस्मिन् समये व्यापारद्वयस्य कर्तुमशक्यत्वाच्चिद्रूपतयैवावशिष्यते । अतो मोक्षावस्थायां निवृत्ताधिकारेषु गुणेषु चिन्मात्ररूप एवात्माऽवतिष्ठत् इत्येव युक्तम् ।
संसारदशायां तु एवम्भूतस्यैव कर्तृत्वं भोक्तृत्वमनुसन्धातृत्वं च सर्वमुपपद्यते ।
तथाहि --- योऽयं प्रकृत्या सहानादिर्नैसर्गिकोऽस्य भोग्यभोक्तृत्वलक्षणसम्बन्धोऽविवेकख्यातिमूलः । अस्मिन् सति पुरुषार्थकर्तव्यतारूपशक्तिद्वयसद्भावे या महदादिभावेन परिणतिस्तस्यां संयोगे सति यदात्मनोऽधिष्ठातृत्वं

चिच्छायासमर्पणसामर्थ्यं बुद्धिसत्त्वस्य च संक्रान्तचिच्छायाग्रहणसामर्थ्यं चिदवष्टब्धायाश्च बुद्धेर्योऽयं कर्तृत्वभोक्तृत्वाध्यवसायस्तत एव सर्वस्यानुसन्धानपूर्वकस्य व्यवहारस्य निष्पत्तेः किमन्यैः फल्गुभिः कल्पनाजल्पैः ।
यदि पुनरेवम्भूतमार्गव्यतिरेकेण पारमार्थिकमात्मनः कर्तृत्वाद्यङ्गीक्रियेत तदाऽस्य परिणामित्वप्रसङ्गः । परिणामित्वाच्चानित्यत्वे तस्याऽऽत्मत्वमेव न स्यात् । यथा ह्येकस्मिन्नेव समये एकेनैकरूपेण न परस्परविरुद्धावस्थानुभवः सम्भवति । तथाहि --- यस्यामवस्थायामात्मसमवेते सुखे समुत्पन्ने तस्यानुभवितृत्वं न तस्यामेवावस्थायां दुःखानुभवितृत्वम् । अतोऽवस्थानानात्वात् तदभिन्नस्यावस्थावतो नानात्वम् । नानात्वाच्च परिणामित्वान्नात्मत्वम् । नापि नित्यत्वम् । अत एव शान्तब्रह्मवादिभिः सांख्यैरात्मनः सदैव संसारदशायां मोक्षदशायां चैकं रूपमङ्गीक्रियते ।
ये तु वेदान्तवादिनश्चिदानन्दमयत्वमात्मनो मोक्षं मन्यन्ते तेषां न युक्तः पक्षः । तथाहि --- आनन्दस्य सुखस्वरूपत्वात् सुखस्य च सदैव संवेद्यमानतयैव प्रतिभासात् संवेद्यमानत्वं च संवेदनव्यतिरेकेणानुपपन्नमिति संबेद्यसंवेदनयोर्द्वयोरभ्युपगमाददैतहानिः । अथ सुखात्मकत्वमेव तस्योच्येत तद्विरुद्धधर्माध्यासादनुपपन्नम् । न हि संवेदनं संवेद्यं चैकं भवितुमर्हतीति ।
किञ्चाद्वैतवादिभिः कर्मात्मपरमात्मभेदेनात्मा द्विविधः स्वीकृतः । इत्थं च तत्र येनैव रूपेण सुखदुःखभोक्तृत्वं कर्मात्मनस्तेनैव रूपेण यदि परमात्मनः स्यात्तदा कर्मात्मवत् परमात्मनः परिणामित्वमविद्यास्वभावत्वं च स्यात् । अथ न तस्य साक्षाद्भोक्तृत्वं किन्तु तदुपढौकितमुदासीनतयाऽधिष्ठातृत्वेन स्वीकरोति तदाऽस्मद्दर्शनानुप्रवेशः । आनन्दरूपता च पूर्वमेव निराकृता ।
किञ्चाविद्यास्वभावत्वे निःस्वभावत्वात् कर्मात्मनां कः शास्त्राधिकारी । न तावन्नित्यनिर्मुक्तत्वात् परमात्मा । नाप्यविद्या स्वभावत्वात् कर्मात्मा । ततश्च सकलशास्त्रवैयर्थ्यप्रसङ्गः । अविद्यामयत्वे च जगतोऽङ्गीक्रियमाणे कस्याविद्येति विचार्यते । न तावत् परमात्मनो नित्यमुक्तत्वाद्विद्यारूपत्वाच्च । कर्मात्मनोऽपि परमार्थतो निःस्वभावतया शशविषाणप्रख्यत्वे कथमविद्यासम्बन्धः । अथोच्यते नम । एतदेवाविद्याया अविद्यात्वं यदविचारणीयत्वम् । यैव हि विचारेण दिनकरस्पृष्टनीहारवद्विमलमुपयाति साऽविद्येत्युच्यते । मैवम् । यद्वस्तु किञ्चित् कार्यं करोति तदवश्यं कुतश्चिद्भिन्नमभिन्नं वा वक्तव्यम् । अविद्यायाश्च

संसारलक्षणकार्यकर्तृत्वमवश्यमङ्गीकर्तव्यम् । तस्मिन् सत्यपि यद्यनिर्वाच्यत्वमुच्यते तदा कस्यचिदपि वाच्यत्वं न स्यात् ब्रह्मणोऽप्यवाच्यत्वप्रसक्तिः । तस्मादधिष्ठातृतारूपव्यतिरेकेण नान्यदात्मनो रूपमुपपद्यते । अधिष्ठातृत्वं च चिद्रूपत्वमेव तद्व्यतिरिक्तस्य धर्मस्य कस्यचित् प्रमाणानुपपत्तेः ।

यैरपि नैयायिकादिभिरात्मा चेतनायोगाच्चेतन इत्युच्यते चेतनापि तस्य मनःसंयोगजा । तथाहि --- इच्छाज्ञानप्रयत्नादयो ये गुणास्तस्य व्यवहारदशायामात्ममनःसंयोगादुत्पद्यन्ते तैरेव च गुणैः स्वयं ज्ञाता कर्ता भोक्तेति व्यपदिश्यते । मोक्षदशायां तु मिथ्याज्ञाननिवृत्तौ तन्मूलानां दोषाणामपि निवृत्तिः । तेषां बुद्ध्यादीनां विशेषगुणानामत्यन्तोच्छित्तिः स्वरूपमात्रप्रतिष्ठत्वमात्मनोऽङ्गीकृतं तेषामयुक्तः पक्षः । यतस्तस्यां दशायां नित्यत्वव्यापकत्वादयो गुणा आकाशादीनामपि सन्ति । अतस्तद्वैलक्षण्येनात्मनश्चिद्रूपत्वमवश्यमङ्गीकार्यम् । आत्मत्वविलक्षणजातियोग इति चेन्न । सर्वस्यैव तज्जातियोगः सम्भवति । अतो जातिभ्यो वैलक्षण्यमात्मनोऽवश्यमङ्गीकर्तव्यम् । तस्याधिष्ठातृत्वं चिद्रूपतयैव घटते नान्यथा ।

यैरपि मीमांसकैः कर्मकर्तृरूप आत्माऽङ्गीक्रियते तेषामपि न युक्तः पक्षः । तथाहि --- अहंप्रत्ययग्राह्य आत्मेति तेषां प्रतिज्ञा । अहंप्रत्यये च कर्तृत्वं कर्मत्वं चात्मन एव । न चैतद्विरुद्धत्वादुपपद्यते । कर्तृत्वं प्रमातृत्वं कर्मत्वं च प्रमेयत्वम् । न चैतद्विरुद्धधर्माध्यासो युगपदेकस्य घटते । यद्विरुद्धधर्माध्यस्तं न तदेकं यथा भावाभावौ । विरुद्धे च कर्तृत्वकर्मत्वे । अथोच्यते --- न कर्तृत्वकर्मत्वयोर्विरोधः किन्तु कर्तृत्वकरणत्वयोः । नैतद्युक्तम् । विरुद्धधर्माध्यासस्य तुल्यत्वात् कर्तृत्वकर्मत्वयोरेव विरोधो न कर्तृत्वकर्मत्वयोः । तस्मादहंप्रत्ययग्राह्यत्वंपरिहृत्यात्मनोऽधिष्ठातृत्वमेवोपपन्नम् । तच्च चेतनत्वमेव ।

यैरपि द्रव्यबोधपर्यायभेदेनात्मनोऽव्यापकस्य शरीरपरिमाणस्य परिणामित्वमिष्यते तेषामुत्थानपराहत एव पक्षः । परिणामित्वे चिद्रूपताहानिः । चिद्रूपताऽभावे किमात्मन आत्मत्वम् । तस्मादात्मन आत्मत्वमिच्छता चिद्रूपत्वमेवाङ्गीकर्तव्यम् । तच्चाधिष्ठातृत्वमेव ।

केचित् कर्तृरूपमेवात्मानमिच्छन्ति । तथाहि --- विषयसान्निध्ये या ज्ञानलक्षणा क्रिया समुत्पन्ना तस्या विषयसंवित्तिः फलम् । तस्यां च फलरूपायां संवित्तौ स्वरूपं प्रकाशरूपतया प्रतिभासते । विषयश्च ग्राह्यतया । आत्मा च ग्राहकतया । घटमहं जानामीत्याकारेण तस्याः समुत्पत्तेः । क्रियायाश्च कारणं कर्तेव

भवतीत्यतः कर्तृत्वं भोक्तृत्वं चात्मनो रूपमिति । तदनुपपन्नम् । यस्मात्तासां संवित्तीनां स किं कर्तृत्वं युगपत् प्रतिपद्यते क्रमेण वा । युगपत् कर्तृत्वे क्षणान्तरे तस्य कर्तृत्वं न स्यात् । अथ क्रमेण कर्तृत्वं तदैकरूपस्य न घटते । एकेन रूपेण चेत्तस्य कतृत्वं तदैकस्य सदैव सन्निहितत्वात् सर्वं फलमेकरूपं स्यात् । अथ नानारूपतया तस्य कर्तृत्वम् । तदा परिणामित्वम् । परिणामित्वाच्च न चिद्रूपत्वम् । अतश्चिद्रूपत्वमात्मन इच्छद्भिर्न साक्षात्कर्तृत्वमङ्गीकर्तव्यम् । यादृशमस्माभिः कर्तृत्वमात्मनः प्रतिपादितं कूटस्थस्य नित्यस्य चिद्रूपस्य तदेवोपपन्नम् । एतेन स्वप्रकाशस्यात्मनो विषयसंवित्तिद्वारेण ग्राहकत्वमभिव्यज्यत इति ये वदन्ति तेऽपि अनेनैव निराकृताः ।
केचिद्विमर्शात्मकत्वेनात्मनश्चिन्मयत्वमिच्छन्ति । त आहुः --- न विमर्शव्यतिरेकेण चिद्रूपत्वमात्मनो निरूपयितुं शक्यम् । जडाद्वैलक्षण्यमेव चिद्रूपत्वमुच्यते । तच्च विमर्शव्यतिरेकेण निरूप्यमाणं नान्यथाऽवतिष्ठते । --- तदनुपपन्नम् । इदमित्थमेव रूपमिति यो विचारः सः विमर्श इत्युच्यते । स चास्मिताव्यतिरेकेण नोत्थानमेव लभते । तथाहि --- आत्मन्युपजायमानो विमर्शोऽहमेवम्भूत इत्यनेनाऽऽकारेण संवेद्यते । ततश्चाहंशब्दसम्भिन्नस्यात्मलक्षणस्यार्थस्य तत्र स्फुरणान्न तत्र विकल्पस्वरूपताऽतिक्रमः । विकल्पश्चाध्यवसायात्मा बुद्धिधर्मो न चिद्धर्मः । कूटस्थनित्यत्वेन चितेः सदैकरूपत्वान्नित्यत्वान्नाहङ्कारानुप्रवेशः । तदनेन सविमर्शत्वमात्मनः प्रतिपादयता बुद्धिरेवात्मत्वेन भ्रान्त्या प्रतिपादिता न प्रकाशात्मनः परस्य पुरुषस्य स्वरूपमवगतमिति । इत्थं सर्वेष्वेव दर्शनेष्वधिष्ठातृत्वं विहाय नान्यदात्मनो रूपमुपपद्यते । अधिष्ठातृत्वं च चिद्रूपत्वम् । तच्च जडाद्वैलक्षण्यमेव । चिद्रूपतया यदधितिष्ठति तदेव भोग्यतां नयति । यच्च चेतनाधिष्ठितं तदेव सकलव्यापारयोग्यं भवति । एवं च सति नित्यत्वात् प्रधानस्य व्यापारनिवृत्तौ यदात्मनः कैवल्यमस्माभिरुक्तं तद्विहाय दर्शनान्तराणां नान्या गतिः । तस्मादिदमेव युक्तमुक्तं वृत्तिसारूप्यपरिहारेण स्वरूपे प्रतिष्ठा चितिशक्तेः कैवल्यम् । ]

सर्वे यस्य वशाः प्रतापवसतेः पादान्तसेवानतिप्रभ्रश्यन्मुकुटेषु मूर्धसु दधत्याज्ञां धरित्रीभृतः ।
यद्वक्त्राम्बुजमाप्य गर्वमसमं वाग्देवता संश्रिता स श्रीभोजपतिः फणाधिपतिकृत्सूत्रेषु वृत्तिं व्यधात् ॥

इति श्रीधारेश्वरभोजदेवविरचितायां राजमार्तण्डाभिधायां
पातञ्जलवृत्तौ कैवल्यपादश्चतुर्थः ।

समाप्तश्चायं ग्रन्थः ।
॥ ॐ शान्तिः शान्तिः शान्तिः ॥

अथ पातञ्जलयोगसूत्राणि ।

अथ समाधिपादः ॥ १॥

अथ योगानुशासनम् ॥ समाधि १॥

योगश्चित्तवृत्तिनिरोधः ॥ समाधि २॥

तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ समाधि ३॥

वृत्तिसारूप्यमितरत्र ॥ समाधि ४॥

वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ समाधि ५॥

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ समाधि ६॥

प्रत्यक्षानुमानागमाः प्रमाणानि ॥ समाधि ७॥

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ समाधि ८॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ समाधि ९॥

अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ समाधि १०॥

अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ समाधि ११॥

अभ्यासवैराग्याभ्यां तन्निरोधः ॥ समाधि १२॥

तत्र स्थितौ यत्नोऽभ्यासः ॥ समाधि १३॥

स तु दीर्घकालादरनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ समाधि १४॥

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ समाधि १५॥

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ समाधि १६॥

वितर्कविचारानन्दास्मितारूपानुगमात्सम्प्रज्ञातः ॥ समाधि १७॥

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ समाधि १८॥

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ समाधि १९॥

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ समाधि २०॥

तीव्रसंवेगानामासन्नः ॥ समाधि २१॥

मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ समाधि २२॥

ईश्वरप्रणिधानाद्वा ॥ समाधि २३॥

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ समाधि २४॥

तत्र निरतिशयं सार्वज्ञ्यबीजम् ॥ समाधि २५॥

स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ समाधि २६॥

तस्य वाचकः प्रणवः ॥ समाधि २७॥

तज्जपस्तदर्थभावनम् ॥ समाधि २८॥

ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्च ॥ समाधि २९॥

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ समाधि ३०॥

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ समाधि ३१॥

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ समाधि ३२॥

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयानां

भावनातश्चित्तप्रसादनम्
 ॥ समाधि ३३॥

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ समाधि ३४॥

विषयवती वा प्रवृतिरुत्पन्ना स्थितिनिबन्धिनी ॥ समाधि ३५॥

विशोका वा ज्योतिष्मती ॥ समाधि ३६॥

वीतरागविषयं वा चित्तम् ॥ समाधि ३७॥

स्वप्ननिद्राज्ञानालम्बनं वा ॥ समाधि ३८॥

यथाभिमतध्यानाद्वा ॥ समाधि ३९॥

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ समाधि ४०॥

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु
तत्स्थतदञ्जनता समापत्तिः ॥ समाधि ४१॥

शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः ॥ समाधि ४२॥

स्मृतिपरिशुद्धौ स्वरूपशून्येवाऽर्थमात्रनिर्भासा निर्वितर्का ॥ समाधि ४३॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ समधि ४४॥

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ समाधि ४५॥

ता एव सबीजः समाधिः ॥ समाधि ४६॥

निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ समाधि ४७॥

ऋतम्भरा तत्र प्रज्ञा ॥ समधि ४८॥

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ समाधि ४९॥

[ प्रज्ञाभ्यां सामान्यविषया इति पाठोऽपि दृश्यते । ]
तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ समाधि ५०॥

तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ समाधि ५१॥

इति समाधिपादः ॥ १॥

अथ साधनपादः ॥ २॥

तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ साधन १॥

समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ साधन २॥

अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ साधन ३॥

अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ साधन ४॥

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ साधन ५॥

दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ साधन ६॥

सुखानुशयी रागः ॥ साधन ७॥

दुःखानुशयी द्वेषः ॥ साधन ८॥

स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ॥ साधन ९॥

ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ साधन १०॥

ध्यानहेयास्तद्वृत्तयः ॥ साधन ११॥

क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ साधन १२॥

सति मूले तद्विपाको जात्यायुर्भोगाः ॥ साधन १३॥

ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ साधन १४॥

परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं
विवेकिनः ॥ साधन १५॥

हेयं दुःखमनागतम् ॥ साधन १६॥

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ साधन १७॥

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ साधन १८॥

विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ साधन १९॥

द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ साधन २०॥

तदर्थ एव दृश्यस्यात्मा ॥ साधन २१॥ [तदर्थः एव ]
कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ साधन २२॥

स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ साधन २३॥

तस्य हेतुरविद्या ॥ साधन २४॥

तदभावे संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ साधन २५॥

विवेकख्यातिरविप्लवा हानोपायः ॥ साधन २६॥

तस्य सप्तधा प्रान्तभूमौ प्रज्ञा ॥ साधन २७॥

[ तस्य सप्तधा प्रान्तभूमिः प्रज्ञा इति वा बहुसम्मतः सूत्रपाठः
]
योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ साधन
२८॥

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ साधन २९॥

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ साधन ३०॥

जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ साधन ३१॥

शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ साधन ३२॥

वितर्कबाधने प्रतिपक्षभावनम् ॥ साधन ३३॥

वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका
मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ साधन ३४॥

अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥ साधन ३५॥

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ साधन ३६॥

अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ साधन ३७॥

ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ साधन ३८॥

अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः ॥ साधन ३९॥

शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ साधन ४०॥

सत्त्वशुद्धिसौमनस्यैकाग्रतेन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ साधन ४१॥

सन्तोषादनुत्तमः सुखलाभः ॥ साधन ४२॥

कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ साधन ४३॥

स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ साधन ४४॥

समाधिसिद्धिरीश्वरप्रणिधानात् ॥ साधन ४५॥

स्थिरसुखमासनम् ॥ साधन ४६॥

प्रयत्नशैथिल्यानन्त्यसमापत्तिभ्याम् ॥ साधन ४७॥

ततो द्वन्द्वानभिघातः ॥ साधन ४८॥

तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ साधन ४९॥

स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो
दीर्घसूक्ष्मः
॥ साधन ५०॥

बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ साधन ५१॥

ततः क्षीयते प्रकाशावरणम् ॥ साधन ५२॥

धारणासु च योग्यता मनसः ॥ साधन ५३॥

स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ साधन ५४॥

ततः परमा वश्यतेन्द्रियाणाम् ॥ साधन ५५॥

इति साधनपादः ॥ २॥

अथ विभूतिपादः ॥ ३॥

देशबन्धश्चित्तस्य धारणा ॥ विभूति १॥

तत्र प्रत्ययैकतानता ध्यानम् ॥ विभूति २॥

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ विभूति ३॥

त्रयमेकत्र संयमः ॥ विभूति ४ ॥

तज्जयात्प्रज्ञालोकः ॥ विभूति ५ ॥

तस्य भूमिषु विनियोगः ॥ विभूति ६॥

त्रयमन्तरङ्गं पूर्वेभ्यः ॥ विभूति ७॥

तदपि बहिरङ्गं निर्बीजस्य ॥ विभूति ८॥

व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ विभूति ९॥

तस्य प्रशान्तवाहिता संस्कारात् ॥ विभूति १०॥

सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ विभूति ११॥

शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ विभूति १२॥

एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ विभूति १३॥

शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ विभूति १४॥

क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ विभूति १५॥

परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ विभूति १६॥

शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥ विभूति १७॥

संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥ विभूति १८॥

प्रत्ययस्य परचित्तज्ञानम् ॥ विभूति १९॥

न च तत्सालम्बनं तस्याविषयीभूतत्वात् ॥ विभूति २०॥

कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासंयोगेऽन्तर्धानम् ॥ विभूति २१॥

सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ विभूति २२॥

मैत्र्यादिषु बलानि ॥ विभूति २३॥

बलेषु हस्तिबलादीनि ॥ विभूति २४॥

प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ विभूति २५॥

भुवनज्ञानं सूर्ये संयमात् ॥ विभूति २६॥

चन्द्रे ताराव्यूहज्ञानम् ॥ विभूति २७॥

ध्रुवे तद्गतिज्ञानम् ॥ विभूति २८॥

नाभिचक्रे कायव्यूहज्ञानम् ॥ विभूति २९॥

कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ विभूति ३०॥

कूर्मनाड्यां स्थैर्यम् ॥ विभूति ३१॥

मूर्धज्योतिषि सिद्धदर्शनम् ॥ विभूति ३२॥

प्रातिभाद्वा सर्वम् ॥ विभूति ३३॥

हृदये चित्तसंवित् ॥ विभूति ३४॥

सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः
परार्थान्यस्वार्थसंयमात्पुरुषज्ञानम् ॥ विभूति ३५॥

[ परार्थत्वात् स्वार्थसंयमात् इत्येव बहुसम्मतः सूत्रपाठः । ]
ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ विभूति ३६॥

ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ विभूति ३७॥

बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ विभूति ३८॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ विभूति ३९॥

समानजयात्प्रज्वलनम् ॥ विभूति ४०॥

[ ज्वलनम् इत्येव् बहुसम्मतः सूत्रपाठः ]
श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥ विभूति ४१॥

कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ विभूति ४२॥

बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ विभूति
४३॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ विभूति ४४॥

ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ विभूति
४५॥

रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ॥ विभूति ४६॥

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ विभूति ४७॥

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ विभूति ४८॥

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं
सर्वज्ञातृत्वं च ॥ विभूति ४९॥

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ विभूति ५०॥

स्वाम्युपनिमन्त्रणे सङ्गस्मयाऽकरणं पुनरनिष्टप्रसङ्गात् ॥ विभूति
५१॥

क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ विभूति ५२॥

जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ विभूति
५३॥

तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ विभूति ५४॥

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ विभूति ५५॥

इति विभूतिपादः ॥ ३॥

अथ कैवल्यपादः ॥ ४॥

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ कैवल्य १॥

जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ कैवल्य २॥

निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ कैवल्य ३॥

निर्माणचित्तान्यस्मितामात्रात् ॥ कैवल्य ४॥

प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ कैवल्य ५॥

तत्र ध्यानजमनाशयम् ॥ कैवल्य ६॥

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ कैवल्य ७॥

ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ कैवल्य ८॥

जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ कैवल्य ९॥

तासामनादित्वं चाऽऽशिषो नित्यत्वात् ॥ कैवल्य १०॥

हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ कैवल्य
११॥

अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ कैवल्य १२॥

ते व्यक्तसूक्ष्मा गुणात्मानः ॥ कैवल्य १३॥

परिणामैकत्वाद्वस्तुतत्त्वम् ॥ कैवल्य १४॥

वस्तुसाम्ये चित्तभेदात्तयोर्विविक्तः पन्थाः ॥ कैवल्य १५॥

तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ कैवल्य १६॥

सदा ज्ञाताश्चित्तवृत्तयः तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ कैवल्य १७॥

न तत्स्वाभासं दृश्यत्वात् ॥ कैवल्य १८॥

एकसमये चोभयानवधारणम् ॥ कैवल्य १९॥

चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ कैवल्य २०॥

चित्तेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ कैवल्य
२१॥

द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ कैवल्य २२॥

तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ कैवल्य
२३॥

विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ कैवल्य २४॥

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ कैवल्य २५॥

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ कैवल्य २६॥

हानमेषां क्लेशवदुक्तम् ॥ कैवल्य २७॥

प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ कैवल्य २८॥

ततः क्लेशकर्मनिवृत्तिः ॥ कैवल्य २९॥

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ कैवल्य ३०॥

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ कैवल्य ३१॥

क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ कैवल्य ३२॥

पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा
वा चितिशक्तेरिति ॥ कैवल्य ३३॥

चितिशक्तिः इति बहुसम्मतः सूत्रपाठः ।

इति कैवल्य पादः ॥ ४॥

इति पातञ्जलयोगसूत्राणि ।

प्रमादाः सूर्यांशु रायाय प्रेषितव्याः ।